# आरम्भवादः

( प्रथमो भागः )


रचयिता

पण्डितश्रीबदरीनाथशुक्लः शास्त्री M. A.,

न्यायवेदान्ताचार्यः

काशीहिन्दूविश्वविद्यालये दर्शनविभागाध्यापकः



प्रथमावृत्तिः ५००

गुरुपूर्णिमा २००८ वै०

मूल्य [illegible]

## श्रीकाशीविश्वनाथो विजयते

कुर्वन् यः सचराचरं जगदिदं जीवार्जितैः कर्मभि-
र्बिभ्रत् क्षीरसमीरनीरसदृशैरावश्यकैर्वस्तुभिः ।
भूयश्च क्षपयन् क्षणेन रमते योगीश्वरः शङ्करः
स श्रूयाद् विनिवेदनं मम महादेवो दयासागरः ॥

## समर्पणम्

*मिथिलाख्यः सुविख्यातो ज्यायाञ्जनपदो महान् ।*
*भव्यभारतवर्षस्य विद्यते मण्डनं महत् ॥१॥*
*तत्र श्रोत्रियवंशस्य वन्दनीयस्य सर्वथा ।*
*विभूतिप्रमुखेष्वेको* **बालकृष्णो** *महागुरुः ॥२॥*
**बदरीनाथशुक्लेन** *तदेकाशीःपिपासुना ।*
*तस्मै समर्प्यमाणैषा कृतिर्विजयते चिरम् ॥३॥*



# आदिमन्निवेदनम्

अनादिकालात् प्रवर्तमानेऽस्मिन् संसारे मानवप्राणिना यन्महत्त्वपूर्णं स्थानमुपार्जितं तन्न केनाप्यपलपनीयम्। अयमेव स प्राणी यं सृष्ट्वा सृष्टिकर्ता कृतार्थमात्मानं मन्यते। तत्रापि कर्मभूमौ भारते वर्षे जातवतो मनुष्यस्य महान् विशेषः अत्रत्येन मानवेन धर्मस्य न धनार्थता किन्तु मोक्षार्थता, धनस्य न कामार्थता किन्तु धर्मार्थता, कामस्य नेन्द्रियतर्पणार्थता परन्तु जीवनार्थता जीवनस्य, नाव्यवस्थितव्यापारार्थताऽपि तु तत्त्वजिज्ञासार्थतेति पवित्रमादर्शमुपस्थाप्य जगदात्मपक्षे समावर्जितम्, वैज्ञानिकीं विशुद्धां चातुर्वर्ण्यस्य चातुराश्रम्यस्य च व्यवस्थां पुरस्कृत्य सुदृढं समाजनिर्माणं निष्पादितम्, सोपानक्रमेण विविधानि दर्शनशास्त्राणि प्रादुर्भाव्य व्यावहारिकीं पद्धतिं च तदाधारां विधाय राजनीतिसङ्घर्षानलज्वालाजालोपशमनं सम्पादितम्, अपवर्गप्राप्तिलक्षणं मानवजीवनस्य चरमं लक्ष्यमाविष्कृत्य निखिलानर्थमूलं संसारेऽस्यासञ्जनं च शिथिलीकृतम्। अत एवास्य देशस्य मानवो देशान्तराणां मनुष्यान्निस्संशयमतिशेते।

दर्शनं हि परोक्षव्यतिरिक्तानुभवरूपम्। एतदेव दर्शनशास्त्राणां मूलम् "आयुर्वै घृतम्" इत्यादौ कार्ये कारणशब्दोपचारदर्शनेनापि दर्शनशास्त्रात्मके कार्ये दर्शनात्मककारणशब्दोपचारः। आचार्या हि वस्तुतत्त्वं दृष्ट्वैव शास्त्रजातं प्रणिन्युरित्याशयः।

अत्रायं प्रश्नो निसर्गतः समुन्मिषति यद् यदि तत्तद्दर्शनशास्त्रं तत्तदाचार्येण वस्तुतत्त्वदर्शनपूर्वकं प्रणीतं तर्हि दर्शनेषु परस्परं घोरतरो विरोधः कथन्दृश्यते? नह्येकस्य वस्तुनो मिथो विरुद्धानि बहूनि तत्त्वानि सम्भवन्ति। न खल्वात्मनो बौद्धैर्वर्ण्यमानं क्षणिकत्वम्, आर्हतैर्व्याह्रियमाणमविच्छिन्नपर्यायप्रवाहात्मत्वम्, न्यायवैशेषिकैर्निरूप्यमाणमेकान्तनित्यत्वम्, सांख्ययोगैरुद्गीयमानं कूटस्थनित्यत्वम्, मीमांसकैर्मन्यमानं चिदात्मनाऽपरिवर्तनार्हत्वेऽप्यचिदात्मना परिवर्तनीयत्वम्, वेदान्तिभिश्चाभिधीय-

मानं निर्धर्मकत्रिकालाबाध्यत्वादिकं सर्वमेव परस्परप्रतिकूलमपि तत्त्वरूपं भवितुमर्हति ।

अस्येदमेवोत्तरं यत्सर्वैर्दर्शनाचार्यैरिदमेकं तत्त्वमैकमत्येन दृष्टं यत्-संसारेऽत्यासक्तो मानवजातेर्महतेऽनर्थायेति तत्परित्यागो महता समरम्भेण समुपास्यः । स च मानवजीवनस्य लक्ष्यान्तरगवेषणं विना नोपपाद्यः, तच्च लक्ष्यान्तरं मोक्षात्मकमन्विष्टम्, मोक्षो यादृशस्तादृशो वा वर्ण्येत, तत्स्वरूपभेदो मानवानां दृष्टिकोणपरिवर्तने परिपन्थितां नाश्रयते, स च नूनं तथैव वर्णयितव्यो यथा मानवमनः स्वात्माभिमुखीकुर्वन् वैषयिका-त्यासङ्गाद्वोपायितुं प्रभवेत् । इत्थं च मोक्षस्वरूपवर्णनानुकूल्येनापरे सर्वेऽपि पदार्था वर्णनीयतां व्रजन्ति, अत आत्मा, परमात्मा, प्रपञ्चः, पुनर्जन्म, प्रापञ्चिको विषयवर्गो वा यथाकामं वर्ण्येत तत्तदाचार्येण, न तेन कापि हानि । केवलमिदमेवावध्यानमावश्यकं यद् वस्तुवर्णनं संसारात्यासक्तिं विघटयेन्न पुनः कथमपि सङ्घटयेत् ।

अस्यामेव भूमिकायां जगतो जन्मप्रकारवर्णनमप्यवतरति । तत्तदा-चार्येण जगतो जन्मविधिः स्वस्वाभिप्रायेण तथैवोपवर्ण्यते यथोपवर्ण्यमानो विज्ञायमानश्च जनरुचिं विशेषतो वशीकर्तुं न प्रभवेत् ।

न्यायवैशेषिकशास्त्रयोरारम्भवादोऽपि जगज्जननप्रकारवर्णनस्यैका विधा । तदुभयशास्त्रद्वयस्यैष एव वादो जनानां बुद्धिमार्गमारोहति, अत एव तदाचार्यैरेव वादो महताऽभिनिवेशेन सुविचारितो व्यवस्थापितश्च । न्यायाचार्यपरीक्षायां काशीहिन्दूविश्वविद्यालयीयायां प्रवेष्टुकामस्य मम निबन्धनीयतयाऽयमेव वादोऽधिकारिभिर्निर्धारित इतीममेवाहमत्र प्रबन्धे सुपरीक्ष्य व्यवस्थापयितुं प्रायतिषि ।

अयं हि भागत्रयेण मया निर्वर्तितः, तत्र प्रथमे भागे न्यायवैशेषिक-सम्मतस्यारम्भवादस्यासत्कार्यवादोपजीविनः परमाणुकारणतावादापर-नाम्नो निरूपणम्, तत्र वादस्यास्य विपक्षेऽधुनावधि समुपलभ्यमानानां प्राचीनार्वाचीनविचक्षणोद्भावितानामाक्षेपाणां प्रतिक्षेपं विधाय तस्य

सम्यक् समर्थनमनुष्ठितम्, द्वितीयभागे बौद्धजैनदर्शनयोः परमाणुवादस्य वर्णनं न्यायवैशेषिकयोः परमाणुवादेन सह तस्य समीक्षणं च संविहितम् । तृतीये भागे पाश्चात्यपरमाणुवादस्योपवर्णनं न्यायवैशेषिकयोस्तद्वादेन साकं समालोचनञ्च सन्निरूपितम् ।

परिशिष्टे पुनरारम्भवादोऽदृष्टपरमेश्वरप्रभृतीन् यान् पदार्थानन्तरेण न निर्वहति तेषां संक्षिप्तं व्यवस्थापनं निबद्धम् ।

अयं निबन्धः परीक्षकाणामन्तःकरणप्रीणने प्रवीणोऽभवदिति तदाननतो निश्चित्य तेषां निर्देशमनुसरता मयाऽस्य प्रकाशनं कर्तव्यतयाऽवधारितं किन्त्वार्थकार्श्यवशाद् युगपदेवाखिलस्याशक्यप्रकाशनतया पर्यायेण तत्करणे प्रवृत्तः प्रथमतः प्रथमं भागमेतस्य विदुषां पुरस्तादुपस्थापयामि । विश्वसिमि चैतेन प्राप्तप्रमोदसन्दोहानां सत्कोविदानां प्रोत्साहनेनाशीर्वचनेन च समिद्धोत्साहो नातिविलम्बेनैवावशिष्टभागयुगलमपि प्रकाश्य पण्डितजनेषूपहर्तुं पारयिष्य इति ।

विदुषामाश्रवस्य
बदरीनाथस्य

## अक्षपादप्रशस्तिः

मिलति नयनमक्षपादपाद-<br>
प्रणिपतनेन ललाटसीम्नि यस्य ।<br>
विधिरपि पुरुषस्य तस्य भाले<br>
लिखितुमदृष्टलिपिं कुतः क्षमेत ॥

## आन्वीक्षिकीमहत्त्वम्

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।<br>
आश्रयः सर्वधर्माणां सेयमान्वीक्षिकी मता ॥

# न्यायवैशेषिकसिद्धान्तानुसारेण

## सृष्टिसंहारनिरूपणम्



प्राजापत्येन मानेन वर्षशतावसाने प्रजापतेरपवर्गकाले जननमरणानुवृत्तिवेदनामयेऽसारेऽस्मिन् संसारे बहुविधक्लेशाकुलाकुलानां प्राणिनां खेदविच्छेदसम्पादनाय सकललोकैकस्वामिनो भगवतो भवानीपतेः वर्षशतान्तशब्दवेद्यसमयविशेषात्मकोपाधिप्रादुर्भावमूलकप्रादुर्भूतत्वव्यवहारविषया ससारसंहारविषयिणी वाञ्छा समुदेति।

तदनुपलं कायकरणमहाभूतभूतिस्थितिनिमित्तानां पुरुषसमवेतभोगभावकादृष्टवृन्दानां फलोन्मुखवृत्तिनिचयस्य प्रलयप्रयोजकेनादृष्टेन निरोधे सति कामान्तककामनाकलितपुरुषपरमाणुसंयोगेभ्यो जनितात् कर्मकलापाद् विग्रहेन्द्रियकारणीभूताणुवृन्दस्य पारस्परिकविभागपूर्वकतदीयसंयोगसंक्षये द्व्यणुकप्रभृतिपर्यन्तस्यान्तः प्रसूतिमुरीकरोति।

एवमेव महेश्वरेच्छादिवशादवनिपानीयज्वलनानिलानां निखिलानामेव महाभूतानां द्व्यणुकपर्यन्तानामुपशमो भवति। ततः परस्परं प्रविभक्ताः परमाणवो धर्माधर्मसंस्कारसहिताश्चात्मानो ब्राह्मेण मानेन वर्षशतान्तन्तिष्ठन्ति।

ततो नभसीव निश्चलप्राये जगति पुनः प्राणिकर्मणां फलोपभोगं भावयितुं प्रसिद्धविभूतेर्भगवतो भूतनाथस्य चिकीर्षामहिम्ना समासादितसमय विशेषात्मकसहकारिसमवधानस्वरूपफलोन्मुखवृत्तिविद्योतितादृष्टविशिष्टात्मसंयोगजनितक्रियातः पवनपरमाणवः परस्परं संयुञ्जन्तो द्व्यणुकादिक्रमेण सर्वथा स्वतो भिन्नं महावायुमुत्पादयन्ति।

तदनु पानीयपरमाणवः पारस्परिकेण संयोगेन महापवनाधार-मुत्तुङ्गतरङ्गमालं महाजलशालं समुद्भावयन्ति।

तत्पश्चात्तस्मिन्नेव तोयनिधौ तेनैव क्रमेण पार्थिवपरमाणु-वर्गो महापृथिवीं परस्परसंयोगतः प्रादुर्भावयति।

तदनन्तरन्तामेव सरणिं शरणीकुर्वाणाः तैजसपरमाणु-गणा इतरेतरप्राप्तिभिः प्रभूतं प्रतापपुञ्जं जनयन्ति।

निर्दिष्टप्रकारेण प्रादुर्भूतेषु महाभूतेषु सर्वप्रभवस्य पार्वतीपतेः सङ्कल्पमात्रात् पार्थिवपरमाणुसहकृततैजसपरमाणुमण्डलतो हिरण्यमयं ब्रह्माण्डं समुद्भवति।

तस्मिन्नतिविचित्रचमत्कारपूर्णप्रपञ्चरचनाचतुरश्चतुराननं प्रादु-र्भाव्य सर्वार्चनीयचरणश्चन्द्रशेखरस्तं प्रजासृष्टौ नियुङ्क्ते।

स च स्मरस्मरणशेषतासृजा समादिष्टो भूयोभिर्विज्ञान-वैराग्यैश्वर्य्यैः समलङ्कृतः पुरातनकर्मानुरूपान् मानसान् सुतान् दक्षप्रभृतिप्रजापतीन् मनुदेवर्षिप्रभृतीनितरांश्चोत्कृष्टापकृष्टान् प्राणिनः समुत्पाद्य तदीयकर्मानुविधायिहिताहितफलैस्तान् संयो-जयतीति।

## परमाणुक्रियासमर्थनम्

परं न्यायवैशेषिकमतरहस्यानभिज्ञानेनारम्भवादं विद्विषन्तः केचिदेवं प्रलपन्ति—

खण्डप्रलयोत्तरं परमाणुभिर्द्व्यणुकादिक्रमेण भवदभ्युपगतो जगज्जननप्रकारो न कथञ्चिदपि विचारपदवीमधिरोढुमीष्टे, द्व्य-णुकारम्भकसंयोगजनकक्रियायाः सृष्टेः पूर्वं परमाणावसम्भवात्। क्रिया हि जन्या, जन्यञ्च जनकसापेक्षमेव भवति, आद्यक्रियायाश्च जनको न कोऽपि सम्भवति, क्रियाकारणतया प्रसिद्धानां वेगनोद-नाभिघातप्रयत्नगुरुत्वद्रवत्वानां वेगादित्रयस्य क्रियासाध्यतया

प्रयत्नस्य च शरीरसाध्यतया सृष्टिप्राक्क्षणेऽसत्त्वात्। चरमयोश्च प्रलये परमाणुषु सतोरपि क्रियासातत्यप्रसङ्गभयेन जनकत्वाभ्युपगमासम्भवात्।

सर्गादौ परमाणावदृष्टमात्रात् क्रिया जायत इति तु न युक्तम् अदृष्टमात्रस्य क्रियाजनकतायाः क्वाप्यदर्शनात्। पवनपावकयोरपि सृष्टिदशायां वायुसंयोगादेव क्रियास्वीकारात्। सर्गादौ चेतनानधिष्ठितस्य तथात्वासम्भवाच्च। न खलु किमप्यचेतनं चेतनानधिष्ठितं कदाचिदपि किमपि कार्यमर्जयतीति।

**परमेतदत्यन्तमुपेक्षणीयम्**—सृष्टेः प्राक् परमाणावदृष्टादेव क्रियोत्पत्तिसम्भवात्। यच्चोक्तम्—नादृष्टमात्रात् क्वापि क्रिया दृष्टा, तत्र कस्यापराधः? अदर्शकानामेव। भवत्येव हि अभिमन्त्रितकांस्यपात्रादावयस्कान्ततृणकान्ताद्याकृष्टलौहतृणादावदृष्टाधीनं कर्म। वह्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनञ्चापि तदधीनमेव, अन्यथाऽन्यथापि कर्मप्रसङ्गात्। भूकम्पोऽप्यनेकेषामपकारकारी पापादृष्टप्रयोज्य एवेति भूयसी संख्या विराजत्यदृष्टाधीनकर्मणाम्।

**यदप्युक्तम्**—अदृष्टं न सर्गादौ परमाणुक्रियां जनयितुं प्रभवति चेतनानधिष्ठितत्वात्। तदप्यतिनिस्तरङ्गम्—सर्गादावपि तत्र जीवाधिष्ठितत्वस्वीकारात्। अदृष्टमप्रत्यक्षयतो जीवस्य कथन्तदधिष्ठातृत्वमिति तु नानुयोज्यम्, तन्निष्पाद्यफलभोक्तृत्वप्रयोज्यतदधिष्ठातृत्वे तत्प्रत्यक्षानावश्यकत्वात्।

अधिष्ठातृत्वं हि द्विधा भवति। तन्निष्पाद्यफलभोक्तृत्वेन, तत्प्रवर्त्तकत्वेन च। प्रथमं यथा—सेनानिष्पाद्यफलभोक्तरि भूमिपतौ, द्वितीयञ्च—सेनाप्रवर्तके सेनापतौ। तत्र तत्प्रवर्तकत्वेन तदधिष्ठातृत्वेऽधिष्ठेयप्रत्यक्षस्य प्रयोजकत्वं स्वीक्रियते। तन्निष्पाद्यफलभोक्तृत्वे न तदधिष्ठातृत्वे च नाङ्गीक्रियते।

अत एव पुरुषस्येन्द्रियाधिष्ठातृत्वमपि सम्भवति, अन्यथा तदपि न स्यात् । न खलु पुरुषस्येन्द्रियाधिष्ठातृत्वमिन्द्रियप्रवर्तकत्वेन स्वीकर्तुं शक्यम्, सन्निकर्षात्मक इन्द्रियव्यापारे पुरुषप्रयत्नानपेक्षणात् ।

इन्द्रियव्यापारस्य पुरुषप्रयत्नसापेक्षत्वे तु दहनसंयोगमनिच्छतः पुरुषस्य कारणवशाद्दहनसंयोगासादने त्वचा तदुष्णत्वग्रहो न स्यात्, न स्याच्च भयावहभूमौ भयानकवस्तुदर्शनप्रतिकूलप्रयत्नस्य भीरुप्राणिनो भयजनके वस्तुनि स्वभावाधीना लोचनस्य प्रसभं प्रवृत्तिः ।

एवञ्च यथाऽतीन्द्रियमिन्द्रियमसाक्षात्कुर्वतोऽपि पुरुषस्येन्द्रियनिष्पाद्यफलभोक्तृत्वेनेन्द्रियाधिष्ठातृत्वम्भवति, तथैवादृष्टमपश्यतोऽपि तस्य तत्सम्पादितफलभोक्तृत्वेन तदधिष्ठातृतायां न लेशतोऽपि बाधा ।

सर्गस्य पूर्वं शरीरादेरभावात् पुरुषोऽदृष्टफलं न भुङ्क्त इति नैवमपि तदानीं तस्यादृष्टाधिष्ठातृत्वं सम्भवतीति न शङ्कनीयम्, यतो हि नायं नियमो "यो यदा यत्कृतं फलं भुङ्क्ते स तदा तदधितिष्ठतीति" किन्तु "यो यत्कृतफलभोगयोग्यो भवति स तदधितिष्ठतीति" अन्यथा भाविफलाशया सैन्यं संरक्षतः क्षितिपतेः सैन्याधिष्ठातृत्वं न स्यात् ।

अदृष्टकृतफलभोगयोग्यत्वञ्च न शरीरादिमत्त्वम्, किन्त्वात्मत्वम्, तच्च सर्गादावप्यात्मन्यस्त्येव । शरीरादिरूपसाधनवैधुर्य्याच्च न तदानीं फलभोगयोग्यस्याप्यात्मनः फलभोगः । सुषुप्तौ च त्वङ्मनःसंयोगवैकल्यान्न फलोपभोगप्रसङ्ग इति ।

चैतन्यमेव सामान्यतोऽधिष्ठातृत्वनियामकम्, अन्यथा जडस्यापि तथात्वापत्तेस्तर्हि कथं सर्गादौ शरीरादिरहितत्वाच्चैतन्यवञ्चितस्यात्मनोऽधिष्ठातृतेति न प्रगदितव्यम्, आत्मत्वस्यैव सामान्यतोऽधिष्ठातृत्वनियामकत्वस्वीकारात् ।

अतो जडमप्यदृष्टं जीवाधिष्ठितं सत् सर्गप्राक्काले परमाणु-क्रियां करोतीत्यत्र न कश्चिदपि प्रत्यूह इति।

आत्मनिष्ठमदृष्टं परमाणौ क्रियां कथमर्जयिष्यतीति तु न देश्यम्, स्वाश्रयसंयोगेन तस्य क्रियाकारणत्वस्वीकारात्। न चैवं-द्व्यणुकारम्भकसंयोगजनकक्रियोत्पत्त्याश्रयत्वेनाभिमतकालात्पूर्वमपि परमाणौ तत्क्रियोत्पत्त्यापत्तिः, पूर्वमप्यदृष्टस्योक्तसंसर्गेण परमाणौ सत्त्वादिति वाच्यम्, द्व्यणुकारम्भकसंयोगजनकाद्यक्रियां प्रति विजातीयस्वाश्रयसंयोगेनादृष्टस्य कारणत्वस्वीकारात्।

कारणतावच्छेदकसंसर्गतावच्छेदकीभूतं वैजात्यञ्च न सर्व-स्मिन्नदृष्टविशिष्टात्मसंयोगे स्वीक्रियते, किन्तूक्तक्रियोत्पत्तेः पूर्व-मुत्पन्न एव संयोगे।

संयोगस्यैकव्यक्तितया कथं तन्मात्रगतं वैजात्यं स्यादिति तु न सन्देह्यम्, सर्गादौ युगपन्नानापरमाणुषु द्व्यणुकारम्भकसंयोग जनकक्रियोत्पत्त्यर्थं बहूनामुक्तसंयोगानामङ्गीकारात्। सर्गभेदेना-द्यक्रियाजनकसंयोगानामनेकत्वाच्चेत्यभिनवो मार्गः।

प्राचीनाचार्यास्तु—कालविशेषस्यादृष्टसहकारितां स्वीकृ-त्यानभिमतसमय आद्यक्रियोत्पत्त्यापत्तिं वारयन्ति। कालविशेष-स्यादृष्टसहकारिता च सर्वैरेवास्तिकैर्दार्शनिकैः स्वीकार्या, अन्यथाऽ-दृष्टस्य पूर्वमपि सत्त्वेन सर्गादौ विलम्बानुपपत्तेः।

प्रलये तपनादेरभावेन क्रियारूपोपाधिवैधुर्य्यात् कालविशेष-व्यवस्था न सम्भवतीति न विपर्यस्तव्यम्, युगपत्सकलब्रह्माण्ड-नाशानभ्युपगमेन ब्रह्माण्डान्तरवर्त्तिसूर्यपरिस्पन्दस्य कालविशेषव्यव-स्थापकत्वसम्भवात्। उक्तञ्च न्यायकुसुमाञ्जलौ तत्रभवद्भिर्माननीयै-रुदयनाचार्यचरणैः—"ब्रह्माण्डान्तरव्यवहारो वा कालोपाधिः, तद्-वच्छिन्ने काले पुनः सर्गः। यथा खल्वलाबुलतायां विततानि फलानि तथा परमेश्वरशक्तावनुस्यूतानि सहस्रशोऽण्डानीति श्रूयते" इति।

ब्रह्माण्डान्तरवर्त्तिसूर्यपरिस्पन्दावच्छिन्नकालस्य कारणत्वं न सम्भवति, उक्तस्पन्दविशेषस्योपलक्षणविधया कारणतावच्छेदकत्वेऽभिमतसमयात्पूर्वमपि परमाणावाद्यक्रियोत्पत्त्यापत्तेः। ब्रह्माण्डान्तरवर्त्तिसूर्यपरिस्पन्दविशेषोपलक्षितकालस्योक्तस्पन्दविशेषोत्पत्तेः पूर्वमपि सत्त्वात्, प्रतियोगिव्यधिकरणतदभावाभाववत्त्वस्यैव तदुपलक्षितत्वस्वरूपत्वात्।

विशेषणविधया कारणतावच्छेदकत्वेऽभिमतसमयेऽपि तत्क्रियानुत्पत्तिप्रसङ्गात्। ब्रह्माण्डान्तरवर्तिसूर्यपरिस्पन्दस्य प्रलयप्रदेशेऽसद्भावेन तदवच्छिन्नकालस्य प्रलयप्रदेशस्थितपरमाणौ सम्बन्धासम्भवात्। विशिष्टसम्बन्धितायाः विशेषणविशेष्योभयसम्बन्धिताधीनत्वादिति तु न वक्तव्यम्, आद्यक्रियायामदृष्टसहकारित्वेनाङ्गीकृतस्य ब्रह्माण्डान्तरवर्तिसूर्यपरिस्पन्दविशेषविशिष्टकालस्य प्रलयप्रदेशस्थितपरमाणौ सम्बन्धसद्भावे बाधकाभावात्। सामानाधिकरण्यसम्बन्धेन विशेषणविशिष्टविशेष्यसम्बन्धितैव विशेषणविशेष्योभयसम्बन्धिताधीना भवति। अत एव संयोगेन दण्डाभाववति देशे संयोगघटितसामानाधिकरण्येन दण्डविशिष्टपुरुषस्याभावो भवति न तु संयोगेन दण्डविशिष्टपुरुषस्येति। तथा च कालिकेन ब्रह्माण्डान्तरवर्त्तिसूर्यपरिस्पन्दविशेषविशिष्टकालस्य सूर्यपरिस्पन्दशून्येऽपि प्रलयप्रदेशस्थितपरमाणौ संयोगेन सद्भावे न किञ्चिन्न प्रतिबन्धकमिति।

यदि चैकस्मिन् काले निखिलब्रह्माण्डानां विनाशोऽभ्युपेयते तदापि न काचित् क्षतिः सुषुप्तावायुःपरिपाकक्रमसम्पादनाय स्वीकृतश्वासप्रश्वासवत् प्रलयेऽपि कालावच्छेदार्थं स्वीकृतस्य परमेश्वरीयप्रयत्नजन्यकर्मणस्तदानीमपि कालविशेषव्यवस्थापकत्वसम्भवात्। उदीरितमप्युदयनाचार्यचरणैर्न्यायकुसुमाञ्जलौ, तद्यथा—"शरीरसंक्षोभश्रमजनितनिद्राणां प्राणिनामायुःपरिपाक-

क्रमसम्पाद्नैकप्रयोजनश्वाससन्तानानुवृत्तिवन्महाभूतसंप्लवसंक्षोभलब्धसंस्काराणां परमाणूनां मन्दतरतमादिभावेन कालावच्छेदैकप्रयोजनस्य प्रचयाख्यसंयोगपर्यन्तस्य कर्मसन्तानस्येश्वरनिःश्वसितस्यानुवृत्तेः" इति।

एतेन अदृष्टविशिष्टात्मसंयोगः परमाणुक्रियासाध्यः परमाणुक्रिया च तत्साध्येति परस्पराश्रय इत्येषोऽप्याक्षेपः परिहृतः, परमेश्वरीयप्रयत्नजन्यपरमाणुक्रियय्यैवादृष्टविशिष्टात्मसयोगसम्भवात्।

ननु स्वीकृतो भवद्भिरात्मपरमाणुसंयोगो न सम्भवति, तस्य स्वीकार आत्मनो निरवयवतयाऽवच्छेदकविशेषासम्भवेन तदभावस्य तत्र स्वीकर्तुमशक्यत्वात्। अवच्छेदकं विनापि तत्स्वीकारेऽवच्छेदकभेदमन्तरेणानिष्टस्य विरुद्धधर्मयोरेकत्र समावेशस्यापत्तेः। न चैषा शक्यते स्वीकर्तुमिष्टतया, विभुनात्मना संयुक्तस्य परमाणोर्व्यापकत्वप्रसङ्गात्। इदमप्यविचारितरमणीयम्, परममहत्परिमाणवत्त्वेन सोपाधिकत्वादात्मसंयोगाभावशून्यत्वस्य सर्वमूर्तसंयोगित्वरूपव्यापकतायाः साधकत्वासम्भवात्।

**केचित्तु**—चैतन्यविशिष्टस्यैवाधिष्ठातृत्वदर्शनात् सर्गादौ देहादिविहीनस्य चैतन्यहीनस्यात्मनोऽदृष्टाधिष्ठातृत्वासम्भवं विभाव्य नित्यचैतन्याञ्चितचन्द्रचूडाधिष्ठितादृष्टात् परमाणावाद्यक्रियाप्रसूतिं मन्यन्ते। नन्वेतदरमणीयम्, अदृष्टे प्रवृत्तिमत्त्वस्य परमात्मनि चादृष्टप्रवृत्त्यनुकूलव्यापारवत्त्वस्य बाधितत्वेनादृष्टप्रवर्त्तकत्वेनादृष्टाधिष्ठातृत्वस्य जगन्नियन्तर्यसम्भवात्। अदृष्टकृतफलभोक्तृत्वेनादृष्टाधिष्ठातृत्वन्तु सुतरामसम्भवि भगवतो भोगप्रयोजकधर्माधर्मविधुरत्वादिति चेन्न, फलाभिमुख्यस्यादृष्टप्रवृत्तित्वेन प्रयत्नविशेषस्येश्वरीयव्यापारत्वेन च स्वीकारात्।

प्रयत्नवत्परमात्मसंयुक्तजीवात्मसमवायरूपस्यादृष्टनिष्ठफलाभि-

मुख्यस्यादृष्टप्रवृत्तित्वेन प्रयत्नविशेषस्येश्वरीयव्यापारत्वेन च स्वीकारात्।

प्रयत्नवत्परमात्मसंयुक्तजीवात्मसमवायरूपस्यादृष्टनिष्ठफलाभिमुख्यस्वरूपप्रवृत्तिप्रयोजकस्य सातत्येऽप्यदृष्टप्रवृत्तिसातत्यापत्तिशङ्का न कार्या कालविशेषस्य सहकारितास्वीकारात्।

परमेश्वरेऽदृष्टप्रवृत्त्यनुकूला प्रवृत्तिर्न सम्भवति प्रयोजनाभावात्, यतो हि न मन्दतमस्यापि प्रयोजनमन्तरा क्वचित्प्रवृत्तिरवालोकि। नास्ति च स्तोकतोऽपि किञ्चित्प्रयोजनं परमात्मनस्तस्य नित्यपरिपूर्णत्वात्। एषोऽपि न शोभनोऽनुयोगः। तथाहि प्रयोजनाभावादित्यनेन किमभिधित्सितं भवतः? कारणाभावादिति वा फलाभावादिति वा? नाद्यः—सदातन्याः परमेश्वरप्रवृत्तेः कारणानपेक्षणात्, कार्यस्यैव कारणसापेक्षत्वनियमात्। न द्वितीयो निखिलस्यैव जन्यजातस्य तत्फलत्वादिति।

## परिमाणुसंयोगाक्षेप—परिहारः

परमाणुभिर्जगदिदं द्व्यणुकादिक्रमेण समुदेतीति न्यायवैशेषिकयोस्सिद्धान्तो न युक्तिसङ्गतः, परमाणूनां परस्परं संयोगासम्भवात्। तथाह्येकस्मिन् परमाणावितरस्य परमाणोः यद्यांशिकः संयोगो भवेत्तदा तस्य सांशता स्यात्, अंशवतश्चाणुत्वं नित्यत्वञ्चोभयमेव बाधितम्। यदि नांशिकः संयोगो भवति तदा सर्वात्मना भवतीत्यभ्युपेयम्। अभ्युपगमश्चेदृशो न हितकरः, परमाणोः परमाणुना सर्वात्मना संयोगे परिमाणोपचयानुपपत्तेः। न दृष्टः क्वचित्केनापि सर्वात्मना जायमानैरवयवसंयोगैरुपचितपरिमाणोदयः। निरंशयोरपि परमाण्वोः संयोगः संयोगस्वाभाव्यादेवाव्याप्यवृत्तिर्भवतीति कथनमपि न कमनीयताङ्कलयति, परमाणुसंयोगस्याव्याप्यवृत्तित्वे परमाणुसंयोगवति परमाणुसंयोगाभावस्य

स्वीकार्यत्वात् । न चैवं सम्भवति, अवच्छेदकमन्तरा विरुद्धयोः भावाभावयोरेकत्र समावेशायोगात् । न च सम्भवोऽवच्छेदकभेदस्य परमाणौ तस्य निरवयवत्वात् । न च प्राच्यादिदिग्विशेषावच्छिन्नः संयोगः सम्भवति कल्पनैषा शक्या कर्तुम्, देशविशेषावच्छिन्नत्वं विना दिगवच्छिन्नत्वस्य कुत्रापि संयोगेऽदर्शनात् । परमाणुग्राहकप्रमाणेन निरवयवस्य परमाणोः सिद्धौ देशावच्छिन्नत्वस्य बाधाद् दिग्विशेषमात्रावच्छिन्नः संयोगः परमाण्वोः सेत्स्यतीत्यपि नानुसरणीया सरणिः, संयोगानुपपत्तिरूपप्रतिकूलतर्कपराहततया निरवयवपरमाणोः सिद्धेरेवासम्भवात् ।

दिग्विशेषावच्छिन्नः संयोगो देशावच्छिन्नोऽपि भवत्येवेति नियमानङ्गीकारेऽपि परमाण्वोर्दिग्विशेषावच्छिन्नः संयोगः सम्भावनातीतः ।

तथाहि—यत्र त्रयः परमाणवः परस्परं संयुञ्जन्ति तत्रान्तरालवर्त्तिनि परमाणौ प्राचीस्थितपरमाणोः संयोगः प्राच्यवच्छेदेन भवति तदभावश्च प्रतीच्यवच्छेदेन भवति । प्रतीचीस्थपरमाणोश्च संयोगः प्रतीच्यवच्छेदेन भवति तदभावश्च प्राच्यवच्छेदेन परमाणोर्मूर्तत्वादिति भवदीयोऽभिसन्धिः, न चैष सम्भवी, निरवयवस्य परमाणोः कश्चित् प्राचीस्थः कश्चिच्च प्रतीचीस्थ इत्यस्यैव दुर्वचत्वात् । यतो हि सावयवस्य कश्चिदवयवः प्राचीस्थः कश्चिच्च प्रतीचीस्थो भवति । प्राचीस्थावयवे च यः संयोगः स तत्र प्राच्यवच्छिन्नो व्यवह्रियते, प्रतीचीस्थावयवे च यः संयोगः स प्रतीच्यवच्छिन्नत्वेन व्यवह्रियते, तथा च सावयवत्वमन्तरा कथमिव परमाण्वोः प्राचीप्रतीच्यवच्छिन्नौ संयोगौ सम्भवेताम् ।

कल्पिताः प्रदेशाः परमाणुसंयोगमवच्छेत्स्यन्तीति कथनन्तु नैव नैयायिकानां युक्तम्भविष्यति, तैः काल्पनिकपदार्थानभ्युपगमात् ।

अत्राभिधीयते—न खलु परमाण्वोः संयोगासम्भवः सम्भावनीयः, तयोर्व्याप्यवृत्तिसंयोगाङ्गीकारात्। संयोगत्वावच्छे-देनाव्याप्यवृत्तित्वनियमस्य परमाणुसंयोगे कालिकाव्याप्यवृत्तित्व-मादायापि निर्वाहसम्भवात्। यो यः संयोगः स सर्वः स्वाश्रय-समवायिदेशावच्छिन्नो भवतीति नियमस्तु नास्त्येव, सावयववृत्ति-संयोगत्वस्योपाधित्वात। यत्र यत्र संयोगे स्वाश्रयसमवायिदेशा-वच्छिन्नत्वं प्रमाणसिद्धं तत्र सर्वत्र सावयववृत्तिसंयोगत्वस्य सत्त्वेन साध्यव्यापकत्वात् विवादाध्यासिते परमाणुसंयोगे संयोगत्वरूप-साधनाव्यापकत्वाच्च। संयोगत्वावच्छेदेन स्वाश्रयसमवायिदेशा-वच्छिन्नत्वनियमस्वीकारे च परमाणुकल्पनाया एव वैयर्थ्यप्रस-ङ्गात्। यैः परमोदारप्रतिभैः परमाणवः स्वीक्रियन्ते, तैर्व्याप्य-वृत्तयस्तेषां संयोगाः स्वीक्रियन्त एवेति तदीयमभिप्रायमनवगच्छतो भवतो न खेदमादधाति तथाविधः पर्यनुयोगः।

अवयवं विना परमाण्वोः कथं संयोगः? इति सन्देहश्च कार्यकारणभावमर्मानभिज्ञानामेव शोभते। अन्यथा तत्तदवयवा-वच्छिन्नसंयोगस्य तत्तदवयवातिरिक्तावयवे प्रादुर्भाववारणाय तत्तदवयवावच्छिन्नसंयोगं प्रति तत्तदवयवत्वेन कारणत्वस्य क्लृप्ततया-ऽवयवावच्छिन्नसंयोगेऽपेक्षणीयानामप्यवयवानाम् अवयवान-वच्छिन्नसंयोगेऽनावश्यकत्वात् कथं किल तादृशी शङ्काऽवसरमा-सादयेत्। नहि यद्यस्य कार्यतावच्छेदकेनानाक्रान्तं तदुत्पत्तावपि तदीयं समवधानं क्वचिदपेक्षितमीक्षितम्।

परमाणौ संयोगस्वीकारे सावयव एव संयोगस्य समीक्षिततया सिद्धायाः संयोगे सावयवत्वव्याप्तेर्बलात् संयोगेन परमाणोः साव-यवत्वापत्तिरित्यपि न भावनीयम्, जन्यद्रव्यत्वेन सोपाधितया संयोगवत्त्वस्य सावयवत्वव्याप्यत्वासम्भवात्।

परमाणौ निरवयवत्वेन हेतुना गुणादीनामिव प्रतियोगिव्यधिकरणसंयोगाभावः सेत्स्यतीत्यपि न युक्तिसङ्गतम् अद्रव्यत्वस्योपाधित्वात्। परमाणुकल्पनाया वैयर्थ्यप्रसङ्गभयेन परमाणुग्राहकप्रमाणेन परमाणुसंयोगसिद्धया बाधाच्च।

ननु दैशिकाव्याप्यवृत्तिसंयोगादेव स्थूलारम्भो भुवनतले व्यलोकीति व्याप्यवृत्तिपरमाणुसंयोगात् स्थूलारम्भो भवदङ्गीकृतो नान्तःसन्तोषकरः सुधीजनस्येति चेन्न, संयोगस्य स्थूलारम्भकतायामव्याप्यवृत्तित्वस्यातन्त्रत्वाद् व्याप्यवृत्तिसंयोगस्य क्वचित्तथाभावे बाधकाभावात्। परमाणुसंयोगादस्थूलस्यैव द्व्यणुकस्योत्पत्तिस्वीकारात्। स्थूलस्य त्रसरेणोरारम्भका द्व्यणुकसंयोगाश्चाव्याप्यवृत्ताय एव द्व्यणुकानां सावयवत्वात्।

**केचित्तु**—संयोगमात्रस्य व्याप्यवृत्तित्वमभ्युपगम्य सर्वत्र व्याप्यवृत्तिसंयोगस्यैव स्थूलारम्भकतामामनन्ति, तेषां नयेऽव्याप्यवृत्तिसंयोगस्य शशविषाणायमानत्वात्।

न च "शाखायां वृक्षे कपिसंयोगो न मूले" इति प्रतीतिबलादव्याप्यवृत्तिसयोगसिद्धया न तन्मतं मान्यं भवितुमर्हति भणनीयमेतत्, उक्तप्रतीतेर्वृत्तसमवायिशाखासमवेतत्वस्य तादृशमूलसमवेतत्वाभावस्य च कपिसंयोगेऽवगाहितयाऽप्युपपत्तिसम्भवात्।

## परमाणुपटले प्रमाणप्रदर्शनम्

ननु परमाणुभिः प्रपञ्चप्रभवस्य नीतिर्नैयायिकानां नितरां निन्दनीयैव परमाणूनामेव प्रमाणागोचरत्वात् इति चेन्न, वक्ष्यमाणप्रकारेण तेषां प्रमाणसिद्धत्वात्। तथाहि—विश्वविदितवैषम्ययोः सुमेरुसर्षपयोर्न कश्चिदपि सचेताः साम्यमनुभवति। साम्यञ्चैनयोः क्वापि सावयवत्वस्रोतसो विश्रान्तिमन्तरा सुरगुरोरपि दुर्निवारमिति नूनमेव क्वचित्तस्य विश्रामः शंसनीयः।

न चानन्तावयवत्वेन तयोः साम्यमनपकारि, अवयवानवस्था च बीजाङ्कुरयोरनवस्थावत् सुसहा। समानपरिमाणत्वञ्च न शक्यमापादयितुम्, दृश्यमानावयवानां संख्यावैषम्यात्तयोः परिमाणवैषम्यसम्भवात्। तथाहि विभागे कृते यदि सर्षपस्य दृश्यमानावयवा दश समुपलभ्यन्ते तदा सुमेरोः सहस्राणीति निगदनीयम्, दृश्यमानावयवेष्वेकैकस्य भागचिन्तायामेकस्याप्यवयवस्यावयवपरम्पराभिर्भुवनमण्डलस्यैव परिव्याप्तताप्रसङ्गात्।

आपत्तिश्चैवमाकारा सर्षपो यदि साक्षात्परम्परासाधारणसुमेरुनिष्पादकावयवानल्पावयवारब्धः स्यात्, तदा दृश्यमाननिजपरिमाणाधिकपरिमाणः स्यादित्यादिः।

अवयवसंख्याया अविशेषेऽपि तेषाम्परिमाणविशेषात् प्रचयविशेषाद्वाऽवयविनोः परिमाणवैषम्यमुत्पत्स्यत इत्यपि न शक्यते वक्तुम्, अवयवानामप्यनन्तावयवत्वेन तेष्वपि संख्याविशेषनियम्ययोः परिमाणप्रचयविशेषयोरसम्भवात्।

विनाशावधित्वमपि सावयवत्वस्रोतसो न शक्यते स्वीकर्त्तुम्, विभज्यमानद्रव्यस्य विभक्तुमशक्यो योऽवयवस्तस्य विनाशासम्भवात्। द्रव्यनाशकत्वेन क्लृप्तस्यारम्भकसंयोगनाशस्य समवायिकारणनाशस्य वा तत्राऽसद्भावात्।

नापि विभागावधित्वं शक्यं समर्थयितुम्, उक्तावयवस्यैकव्यक्तितया विभागासम्भवात्। विभागस्याश्रयद्वयमन्तर्भाव्यैव प्रादुर्भावनियमात्। तथा च यत्रेदं सावयत्वस्रोतो विश्राममाश्रयते स एव निरवयवः परमाणुराख्यायते।

## परमाणुनित्यतानिरूपणम्

ननु निरवयवत्वे सिद्धेऽपि तस्य नित्यत्वे प्रमाणाभाव इति चेन्न, गगनादिदृष्टान्तेन निरवयवद्रव्यत्वेन नित्यत्वानुमानात्। अन्यथा सर्वसम्मताया भावकार्यत्वे सावयवत्वव्याप्तेर्भङ्गप्रसङ्गात्।

परमाणुरनित्यो मूर्तत्वादित्यनुमानेन सत्प्रतिपक्षतेति वाणी नोन्मुद्रणीया, अनित्यत्वसाधकतयोपन्यस्तस्य मूर्तत्वस्य जन्यत्वेन सोपाधित्वात्। मनसि व्यभिचरितत्वाच्च। अवयवावयविभावानवस्थारूपप्रतिकूलतर्कपराहतिरपि हन्ति हेतुमुद्दिष्टम्।

जन्यपवनप्रभृतिनाऽनुमातव्यस्य पवनादिपरमाणोरपेक्षया तेजःप्रभृतिपरमाणावधिकगुणत्वस्य कार्यगुणोपपत्त्यर्थमावश्यकतया स्थूलत्वमावश्यकम्, पवनादीनपेक्ष्य तेजःप्रभृतौ प्रभूतगुणतायाः स्थूलतायाश्च दर्शनेन यद्द्रव्यं यद्द्रव्यापेक्षयाऽतिशयितगुणशालि तद्द्रव्यं तद्द्रव्यापेक्षया स्थूलमिति नियमस्य निर्णीतत्वात्।

एवञ्च पवनादिपरमाण्वपेक्षया तेजःप्रभृतिपरमाण्वादौ स्थूलत्वमावश्यकं यदि सिद्धं तदा तस्यानित्यत्वं दुर्निवारं स्थूलत्वस्यानित्यत्वव्याप्यत्वादित्येतदपि वचनं न चारुतामञ्चति। तद्यथा-पवनापेक्षया गुणोपचयशालि तेजस्तदपेक्षया स्थूलमित्यस्य कोऽर्थः? कठिनमिति न कण्ठतः प्रकटनीयं काठिन्यस्य केवलमिलायामेव स्वीकारात्। निबिडसंयोगवदित्यपि न शोभनम्, पवनापेक्षयाऽधिकनिबिडसंयोगस्य तेजसि प्रमाणैरपरीक्षितत्वात्। पवनो यावद्गुरुत्ववतो द्रव्यस्य पतनं प्रतिबध्नाति—तावद्गुरुत्वातिशयगुरुत्ववतः पतनं तेजः प्रतिबध्नातीत्यपि कल्पना न कमनीया विलोचने विचक्षणवृन्दस्य, तेजसि पतनप्रतिबन्धकताया एवाप्रामाणिकत्वात्।

दिगाद्यपेक्षयाऽधिकगुणशालिन्यपि मनसि तदपेक्षया स्थूलतायाश्शिथिलतया निरुक्तनियमस्य मानमर्यादामतिक्रान्तत्वात्।

## निरवयवस्याणोः परमाणुत्वसाधनम्

निरवयवस्यावयवस्य परमाणुत्वेऽपि प्रमाणाभावो न भावनीयो भावुकैर्विद्वद्वरैः, "अणुत्वं सजातीयनिरूपितापकर्षा-

नाश्रयपरिमाणवृत्ति परिमाणत्वव्याप्यजातित्वाद् महत्त्ववत्" इत्यनुमानेन सजातीयनिरूपितापकर्षानाश्रयाणुपरिमाणस्य सिद्धौ सत्यां "तादृशं परिमाणं क्वचिदाश्रितं परिमाणत्वात्" इत्यनुमानतः तादृशपरिमाणशालिनः परमाणोः सिद्धताया निराबाधादिति ।

## त्रसरेणौ सावयवत्वविश्रान्तेर्वर्जनम्

ननु प्रत्यक्षसिद्धे त्रसरेणावेव सावयवत्वस्रोतसो विश्रान्तिर्वाच्या, विफला निष्प्रामाणिकी च परमाणुप्रभृतीनां कल्पनेति चेन्न, तत्र चाक्षुषत्वोपपादकयोर्महत्त्वसावयवारब्धत्वयोरावश्यकत्वात् ।

न चोद्भूतानभिभूतरूपवत्त्वस्यैव चाक्षुषताम्प्रति प्रयोजकता स्वीक्रियते न तु महत्त्वस्य, उद्भूतानभिभूतरूपवत्त्वं विहाय महत्त्वस्य चाक्षुषताम्प्रत्यन्वयव्यतिरेकयोरदर्शनात् । दूरस्थितस्य कस्यचिद्द्रव्यस्यानुपलब्धेः कस्यचित्त्वोपलब्धेरुपपत्तयेऽपि न महत्त्वसामान्यस्य चाक्षुषतासामान्यम्प्रति प्रयोजकता महत्त्वविशेषस्य द्रव्यविशेषचाक्षुषताम्प्रति प्रयोजकत्वोपगमेनैव तयोरुपपत्तिसम्भवात् ।

एवं सावयवारब्धत्वमपि न चाक्षुषताप्रयोजकं चाक्षुषगुणादौ व्यभिचारात् । द्रव्यचाक्षुषताम्प्रत्यपि न प्रयोजकमनावश्यकत्वात् । चाक्षुषतासामान्यप्रयोजकादेव द्रव्यचाक्षुषताप्रयोजकसहकृताद् द्रव्यचाक्षुषताया उपपत्तिसम्भवात् । एवञ्च त्रुटेश्चाक्षुषोपपत्तये तत्र महत्त्वस्य सावयवारब्धत्वस्य वा नावश्यकतेति वाच्यम्, दूरस्थितस्य कस्यचिदनुपलब्धेः कस्यचिच्चोपलब्धेरुपपादनाय महत्त्वेन चाक्षुषतासामान्यं प्रति प्रयोजकत्वावश्यकत्वात् ।

ननु महत्त्वस्य चाक्षुषतासामान्यम्प्रति प्रयोजकत्वे दूरस्थितस्योत्कृष्टमहत्त्ववतो द्रव्यस्येवापकृष्टमहत्त्ववतो द्रव्यस्यापि चाक्षुषतापत्तिर्महत्त्वस्य तत्रापि सत्त्वात् । तद्वारणाय

महत्त्वविशेषस्य चाक्षुषताविशेषं प्रति प्रयोजकत्वस्वीकारे निष्प्रयोजना सामान्यप्रयोज्यप्रयोजकभावकल्पनेति चेन्न, सामान्यप्रयोज्यप्रयोजकभावानभ्युपगमे विशेषतोऽपि प्रयोज्यप्रयोजकभावासम्भवात् "यदि शेषयोः प्रयोज्यप्रयोजकभावस्तत्सामान्ययोरपि" इति नियमात् ।

इत्थञ्च सावयवारब्धत्वस्यापि द्रव्यचाक्षुषताम्प्रति प्रयोजकता निजीकार्या अन्यथाऽवयवोत्कर्षेण महत्त्वोत्कर्षोपपत्तये महत्त्वकारणत्वेन क्लृप्तस्य सावयवारब्धत्वस्याभावे महत्त्वस्याप्यभावप्रसङ्गेन महत्त्वस्यापि चाक्षुषताप्रयोजकत्वानुपपत्तेरिति ।

## त्रुटिनित्यत्वनिराकरणम्

ननु त्रसरेणौ सावयवत्वविश्रान्तिवादिभिरस्माभिस्तस्य तदीयमहत्त्वस्य च नित्यत्वमुरीक्रियते । त्रसरेणौ नित्यत्वसाधकानुमानञ्चेदृशम्—"त्रसरेणुर्नित्यः उत्कृष्टापकृष्टमहत्त्वोभयानाधारत्वात् गगनवत्" यथा गगनमपकृष्टमहत्त्वानाधारत्वेनोभयानाधारं नित्यञ्च तथा त्रसरेणुरप्युत्कृष्टमहत्त्वानाधारत्वेनोभयानाधारतया नूनमेव नित्य इति ।

न च महत्त्वविशिष्टक्रियावत्त्वेन त्रसरेणौ जन्यत्वसिद्धौ बाधः शङ्कनीयः, अस्मन्मते महत्त्वविशेषणस्य व्यावर्त्याप्रसिद्ध्या हेतोर्व्यर्थविशेषणघटितत्वात् । क्रियावत्त्वमात्रस्य च भवन्नये मनसि व्यभिचरितत्वात् ।

पृथिवीत्वं त्रसरेणुभिन्ननिरवयववृत्ति पृथिवीत्वव्यापकजातित्वात् सत्तावदित्यनुमानेन त्रसरेणुभिन्ननिरवयवपृथिवीसिद्ध्या त्रसरेणुनित्यत्ववादिनां नो नाभ्युपगमभङ्गो भावनीयः, पृथिवीत्वं न त्रसरेणुभिन्ननिरवयववृत्ति, पृथिवीतरावृत्तिजातित्वात् घटत्ववदित्यनुमानेनोक्तानुमानस्य प्रतिरुद्धत्वात् ।

'त्रसरेणुमहत्त्वे नित्यत्वसाधकानुमानञ्चेत्थम्"—त्रसरे-णुमहत्त्वं नित्यं सजातीयनिरूपितोत्कर्षापकर्षोभयानाधारत्वाद् गगनपरिमाणवत्, यथा गगनपरिमाणं परिमाणत्वसाक्षाद्व्याप्यजात्या स्वसजातीयेन केनापि महत्त्वेन निरूपितस्यापकर्षस्यानाधारत्वेनोक्तोभयानाधारत्वान्नित्यं तथा त्रसरेणुमहत्त्वमपि प्रोक्तरूपेण स्वसजातीयेन केनापि महत्त्वेन निरूपितस्योत्कर्षस्यानाधारत्वेनोक्तोभयानाधारत्वादवश्यमेव नित्यमिति त्रसरेणौ न सावयवारब्धत्वकल्पनायाः किञ्चित्फलमिति चेन्न, त्रसरेणुनित्यत्वसाधकत्वेनोपन्यस्तहेतोरपकृष्टमहत्त्वानाधारत्वेन सोपाधित्वात्। त्रसरेणुमहत्त्वे नित्यत्वसाधकत्वेनोपन्यस्तहेतोश्च स्वसजातीयनिरूपितापकर्षानाधारत्वेन सोपाधित्वाच्च त्रसरेणौ तन्महत्त्वे वा नित्यत्वसिद्धेरसम्भवात्।

## द्व्यणुकसमर्थनम्

ननु प्रागुपदर्शितप्रणालिकया सुमेरुसर्षपसाम्यशमनाय सावयवत्वस्रोतोविश्रमस्थानीभूतानाम्परमाणूनां सिद्धत्वेऽपि द्व्यणुकस्याप्रामाणिकतया परमाणुभिर्द्व्यणुकादिक्रमेण जगज्जन्यत इति तार्किकसिद्धान्तस्समुपेक्षणीय एव। तथाहि, त्रसरेणवस्तावत् प्रत्यक्षसिद्धाः ते च चाक्षुषद्रव्यत्वान्महान्तः महत्त्वे सति रूपवत्त्वाच्च सावयवाः। तदवयवाश्च न सावयवाः महत्त्वशून्यत्वात्, अन्यथा तेषां महत्त्वे सति रूपविशेषवत्त्वस्वीकारे चाक्षुषत्वप्रसङ्गात्। ते च, महत्त्वस्य निरवयवतया प्रचयस्य चानाश्रयत्वेऽपि बहुत्वसंख्यासम्बन्धादेव त्रसरेणवात्मकं महद्द्रव्यमुत्पादयिष्यन्ति।

तथा च परमाणव एव साक्षात्त्रसरेणोरारम्भका इति द्व्यणुकमप्रामाणिकमेवेति चेन्न, महत्त्वविशिष्टकार्यद्रव्यत्वस्य कार्यद्रव्या-

रभ्यत्वनियततया त्रुटौ कार्यद्रव्यारभ्यत्वानुमानात्। अन्यथा बहुत्वविशिष्टैः परमाणुभिरेव द्व्यणुकमन्तरेणापि महद्द्रव्यारम्भे घटपटादेरपि तादृशैः परमाणुभिरेवारम्भस्वीकारप्रसक्त्या पटघटादौ भग्ने तन्तुकपालादेरनुपलम्भप्रसङ्गात्।

परमाणवः तन्त्वादिकमारभमाणाः पटादिकमारभन्त इति भणितन्तु न मनागपि मनोरमम्, मूर्त्तयोः समानदेशता विरोधात्।

कपालादेर्न्यूनदेशवृत्तित्वात् घटादेश्च तदधिकदेशवृत्तित्वात् समानदेशत्वेऽपि न विरोधः अन्यूनानतिरिक्तदेशवृत्तित्वस्यैव युगपन्मूर्त्तयोरस्वीकारादित्यपि प्रलापमात्रम्, न्यूनदेशवृत्तिकपालादिशून्यदेशे घटादेरविरोधेऽपि स्वाश्रयीभूतदेशे कपालादेर्घटादिविरोधित्वस्य दुर्वारत्वात्।

मूर्त्तयोः सर्वथा समानदेशत्वानङ्गीकारे चरमतन्तोरपकर्षणे पूर्वपटापकृष्टपटोपलम्भानुपपत्तिस्तु नाशङ्कनीया, चरमतन्तोरपकर्षणेन प्रतिबन्धकस्य पूर्वपटस्य विगमेन शेषतन्तुसंयोगेभ्यः पूर्वपटापकृष्टपटान्तरोत्पत्तेः स्वीकारात्। भवद्भिरपि प्रथमतन्तोरपकर्षणे पूर्वपटापकृष्टपटोपलब्धेरुपपादिकाया एतस्या रीतेरवश्यमेव सत्करणीयत्वात्। अन्यथा प्रथमतन्तोराकर्षणे द्वितन्तुकपटपर्यन्तसमस्तपटनाशे तन्त्वतिरिक्तद्रव्यस्यानुपलम्भप्रसङ्गात्।

एवञ्च परमाणुभिराहत्य त्रसरेणोरुत्पत्तिर्न स्वीकर्त्तुं शक्यत इति द्व्यणुकाभ्युपगम आवश्यकः।

अथ द्व्यणुकाभ्युपगमपक्षेऽप्येष दोषो दुर्निवारः। तद्यथा—यदि द्व्यणुकानि बहुत्वविशिष्टानि त्रुटिमुत्पादयिष्यन्ति, तदा तमिव घटपटादिकमपि प्रादुर्भावयिष्यन्ति, सत्येवं भग्ने घटादौ कपालादीनामनुपलम्भप्रसङ्गस्तदवस्थ एव। बहुत्वविशिष्टैर्द्व्यणुकै-

स्त्रुटिरेवारभ्यते नान्यत्किमपि द्रव्यमिति नियममङ्गीकृत्य पक्षस्यै-तस्य समर्थने बहुत्वविशिष्टैः परमाणुभिस्त्रुटिरेवारभ्यते नान्यत्कि-मपि द्रव्यमिति नियममादृत्य परमाणुभिरेव साक्षात् त्रुटेरारम्भ-इत्येतत्पक्षस्यापि समर्थनसम्भवात्।

अत्रोच्यते—

अवयवावयविभावस्य परमाणुषु विश्रान्तिरिवावयवगतसंख्या-पकर्षस्यापि क्वचिद्विश्रामो वाच्यः, त्रित्वञ्चावयवसंख्यापकर्षस्य विश्रामभूमिर्न भवितुमर्हति त्रित्वादप्यपकृष्टयोर्द्वित्वैकत्वयोस्सत्त्वात्। तत्रैकत्वविशिष्टस्यारम्भकसंयोगानुपपत्त्याऽऽरम्भकत्वं न सम्भ-वति।

आरम्भकतायाः पर्याप्तिसम्बन्धेनावच्छेदकीभूता संख्यैव चावयवसंख्यात्वेन प्रसिद्धाऽतो नैकत्वस्यावयवसंख्यापकर्षस्य विश्रामदेशत्वं सम्भवतीति द्वित्वस्यैवावयवसंख्यापकर्षस्य विश्राम-स्थलत्वं स्वीकार्यमिति न परमाणुद्वयारब्धद्व्यणुकस्याभावः सेद्धुमर्हः।

न च भवद्भिरवयवसंख्यापकर्षस्य विश्रामस्थलसाधनायाव-यवावयविप्रसङ्गस्य विश्रामस्थलं दृष्टान्ततया दर्शितम्, हेतुश्च कश्चन न निर्दिष्ट इति नाभिमतसिद्धिर्भवतां हेतुहीनस्य दृष्टा-न्तोपन्यासस्य साध्यसाधनेऽसामर्थ्यात्, द्वितन्तुकपटस्वीकारेण तन्तुगतद्वित्वसंख्यायां विश्रान्तेरवयवसंख्यापकर्षस्य स्वीकारेण परमाणुगतद्वित्वे तस्यासिद्धेश्चेति नोक्तरीत्या द्व्यणुकसिद्धिस-म्भव इति वाच्यम्। "अणुत्वं जन्यपरिमाणवृत्ति परिमाणत्व-साक्षाद्व्याप्यजातित्वात्, महत्त्ववदित्यनुमानेन जन्याणुपरि-माणम्प्रसाध्य तत्परिमाणं क्वचिदाश्रितं परिमाणत्वान्महत्त्व-वत्" इत्यनुमानेन जन्याणुपरिमाणाश्रयस्य द्व्यणुकस्य सिद्धि-सम्भवात्।

परमाणवो न महद्द्रव्यारम्भकाः नित्यत्वादित्यनुमानतः परमाणूनां महद्द्रव्यानारम्भकत्वे सिद्धे त्रसरेणूत्पत्तये द्व्यणुक-कल्पनाया आवश्यकत्वाच्च।

उपरिष्टादुपदर्शिताभिः प्रणालीभिः प्रमाणगोचरीभूतं द्व्यणुकं यदि त्रसरेणुं नारभेत, द्वित्वविशिष्टं वाऽऽरभेत, तदा न सार्थक-कल्पनाकं स्यात्, तस्माद् बहुत्वविशिष्टैरेव द्व्यणुकैस्त्र्यणुकमार-भ्यते, न द्व्यणुकद्वयात् परमाणुत्रयाद्वा किमपि द्रव्यमारभ्यते प्रयो-जनाभावादिति निर्विवादो विषय एषः।

परमाणूनां क्वचिद् द्व्यणुकद्वारा क्वचिच्च साक्षात् त्र्यणुकारम्भ-कत्वमित्यपि न सम्भवति, तन्तुजनकेष्वंशुकेषु तन्तुजन्यपटाना-रम्भकत्वस्य दृष्टतया कारणाकारणजातीयस्य कार्याकार्यजाती-यानारम्भकत्वनियमस्याभ्युपगमात्।

## द्व्यणुकत्रसरेणुपरिमाणकारणनिर्णयः

ननु परमाणुभिर्जगतः प्रादुर्भावो नादरदृशा शक्यो विलोक-यितुम्, जनकपरिमाणत्वस्य स्वसमानजातीयोत्कृष्टपरिमाणजनक-त्वनियततया परमाणुपरिमाणस्य द्व्यणुकपरिमाणजनकत्वासम्भ-वेन त्रसरेण्वादौ परिमाणोत्पत्तेरसम्भवात्। न चेष्टापत्तिरेषा सम्भ-वति, त्रुटिप्रभृतेः प्रत्यक्षानुपपत्तेः, निष्परिमाणद्रव्यस्य सिद्धान्तासिद्ध-त्वाच्चेति चेन्न, परमाणुगतद्वित्वसंख्यायां द्व्यणुकपरिमाणजनकताया द्व्यणुकगतत्रित्वसंख्यायाश्च त्रसरेणुपरिमाणजनकताया अभ्युपग-मात्।

"परमाणुवृत्तिद्वित्वं न परिमाणजनकं नित्यवृत्तिसंख्यात्वाद् गगनगतसंख्यावत्"

"द्व्यणुकवृत्ति त्रित्वं न परिमाणकारणम् अणुवृत्तित्रित्वत्वात् परमाणुत्रित्ववत्" इत्यनुमानाभ्यां बाधेन नोक्ताभ्युपगमः सम्भ-

वति, न शक्यं समुद्भावयितुमेतत्, परमाणुद्वित्वद्व्यणुकत्रित्वयोः सिद्ध्यसिद्धिभ्यां व्याघातात्। असिद्धत्वे तयोराश्रयासिद्धिः, सिद्धत्वे च प्रयोजनान्तरापायेन परिमाणजनकतयैव सिद्धेरभ्युपगमनीयतया बाधात्।

"द्व्यणुकपरिमाणं न द्वित्वजन्यं परिमाणत्वात्" "त्र्यणुकमहत्त्वं न त्रित्वजन्यं परिमाणत्वात्" इतीमे अप्यनुमाने नार्हतो भवितुम्, प्रसिद्धद्वित्वत्रित्वजन्यत्वविरहे साध्ये सिद्धसाधनप्रसङ्गात्। अप्रसिद्धद्वित्वत्रित्वजन्यत्वविरहस्य साध्यत्वे च साध्याप्रसिद्धेः।

द्व्यणुकत्रसरेणुपरिमाणयोः सिद्ध्यसिद्धिभ्यां व्याघातोऽपि। तथाहि तयोरप्रामाणिकत्वे पक्षासिद्धिः। प्रामाणिकत्वे च पुरोदीरितबाधकवशात् कारणगतपरिमाणजन्यत्वस्य बाधितत्वेन निर्दिष्टसंख्याजन्यतयैव तयोः प्रामाणिकतया प्रदर्शितानुमित्योर्बाधश्च।

## अवयवावयविभावसमर्थनम्

नन्वसिद्धस्तावदवयवावयविभावो भवति चातो निखिलैव पद्धतिरारम्भवादस्योपहसनीया नैयायिकानाम्। तथा हि—घटादयो न कपालाद्यतिरिक्ताः कपालादिगतगुरुत्वेतरगुरुत्वकार्यवत्तयाऽनुपलभ्यमानत्वात्। गुरुत्ववद् यद्द्रव्यं गुरुत्ववतो यस्माद् द्रव्याद्भिद्यते तत्तदीयगुरुत्वेतरगुरुत्वकार्यवत्तयोपलभ्यते यथा कपालादिभिन्नो मठादिः, घटादयः पुनर्नोपलभ्यन्ते कदापि कपालादिगुरुत्वेतरगुरुत्वप्रयोज्यकार्यशालितयेति न ते ततो भिन्ना इति।

परमिदं न प्रतिभावतामन्तःसन्तोषकरं हेतोःस्वरूपासिद्धत्वात्, उपलभ्यन्ते हि घटादयः पतनान्विताः, तेषाञ्च पतनं तदीयगुरुत्वस्यैव फलम्।

ननु न घटादयो निजगुरुत्वेन पात्यन्ते किन्तु स्वकारणगुरुत्वेनैव, समवायेन पतनं प्रति स्वसमवायिसमवायेन गुरुत्वस्य कार-

णत्वकल्पनादिति चेन्न पतनं प्रति स्वसमवायिसमवायेन गुरुत्वस्य हेतुभावाभ्युपगमे कारणगतरूपादीनामपि पातप्रसङ्गात्। न चेष्टापत्तिः सम्भवति, तुल्यन्यायात् कारणगतगुरुत्वस्यापि प्रसक्तपतनतया तत्पतनोपपत्तये गुरुत्वान्तरकल्पनाप्रसङ्गात्।

किञ्च यद् द्रव्यं पतति तत्पूर्वस्थानं परित्यजति, उत्तरस्थानञ्च समासादयति, रूपादयश्च न किञ्चिज्जहति न वा किञ्चिदभिनवं स्थानमाददति नातो रूपादीनां गुरुत्वस्य च पाताङ्गीकारो युक्त इति पतनम्प्रति समवायेनैव गुरुत्वस्य हेतुता स्वीकार्या। तथा च कार्यद्रव्याणां पतनोपपत्तये तेषु गुरुत्वस्वीकार आवश्यक इति भवदुक्तहेतोः स्वरूपासिद्धत्वं सिद्धम्।

ननु न भवता मदीयन्तात्पर्यमवधारितम्, अयन्तावन्मदीयोऽभिप्रायो यद् यथा कपालादिगतगुरुत्वं दण्डादिगतगुरुत्वसहकारेण कपालदण्डाद्याश्रयीभूतां तुलां विशेषतोऽवनमयति, तथैवावयवानामवयविभिन्नत्वमते कपालादिगुरुत्वं कपालादिसमवेतघटादिगतगुरुत्वसहकारेण संयुक्तकपालाद्याश्रयीभूतान्तुलां प्रभूतमवनमयेदिति चेन्न, उपादानगतगुरुत्वप्रयोज्यावनमने उपादेयगतगुरुत्वस्य सहकारित्वानभ्युपगमात्, कल्पनाया दृष्टानुसारित्वात्। दृष्टा हि उपादानोपादेयभावानापन्नद्रव्यवृत्तिगुरुत्वानामेव परस्परसहकारिता विशेषावनमन इति।

केचित्तु-कारणगतगुरुत्वप्रयोज्यकार्यं प्रति कार्यगतगुरुत्वस्य प्रतिबन्धकत्वमामनन्ति। परन्तन्मन्दम्, तथा सति कारणपतनस्यानुपपत्तेः। न चेष्टापत्तिः कार्ये पतति कारणस्यावतिष्ठमानताया अदृष्टत्वात्, कार्यपतनकाले कारणपतनस्यासम्भवेन पततः कार्यस्यानाश्रयत्वप्रसङ्गाच्च।

अत एव कार्यगुरुत्वेन कारणगतं गुरुत्वं नश्यतीत्यपि कथनं कस्यचिन्न कमनीयम्, कार्यद्रव्यापगमे कारणानां पतनापायप्रसङ्गाद् द्रव्यमात्रस्य प्रायशो गुरुत्वविरहप्रसङ्गाच्च। सर्वस्यैव परमाणोः कार्यद्रव्यध्वंसवत्तया गुरुत्वहीनत्वेन कार्यद्रव्याणां कथमपि गुरुत्वासम्भवात्, कार्यद्रव्यगतगुरुत्वस्य कारणगुरुत्वाधीनत्वनियमात्।

सयुक्तकपालद्वयवती तुला कपालातिरिक्तगुरुत्ववद्द्रव्यविधुराऽसंयुक्तकपालोभयवत्तुलीयावनमनातिशयावनमनानाधारत्वादित्यपि न शोभनं हेतोरनैकान्तिकत्वाद् गुरुत्ववदेकत्ररेणुसहितायाः कपालद्वयवत्तुलाया अतिरिक्तत्रसरेणुरहितकपालद्वयवत्तुलीयावनमनाधिकावनमनानाधारत्वेऽपि कपालातिरिक्तगुरुत्ववद्द्रव्यवैधुर्यरूपसाध्यशून्यत्वात्।

ननु पटप्रभृतयो न तन्त्वादिभ्यो भिन्नाः—तन्त्वादिभिस्संयोगस्याप्राप्तेश्चाभावात्, यद् द्रव्यं यद्द्रव्याद् भिद्यते तत्तेन संयुक्तं भवति घटभूतलवत्, अप्राप्तं वा भवति हिमविन्ध्याचलवत्, पटादयः पुनर्न तन्त्वादिभिः संयुक्ता अप्राप्ता वेति न ते तन्त्वादिभ्यो भिन्ना इति चेन्न, हेतोर्व्यभिचारित्वात्। नायं नियमो "यद् यस्माद्भिन्नं तत्तेन सयुक्तम् अप्राप्तं वा भवत्येव" सांख्यैरसंयुक्तयोः शाश्वतप्राप्तयोश्च प्रकृतिपुरुषयोः, असंयुक्तेषु प्राप्तेषु च सत्त्वरजस्तमस्सु परस्परं भेदस्वीकारात्।

पटादयस्तन्त्वादिभ्यो भिन्नाः न भवितुमर्हन्ति तन्वादिगुणजन्यगुणाधारत्वात्, यद् यस्माद् भिद्यते न तत् तदीयगुणजन्यगुणाधारतामादधाति गवाश्ववत्, पटादयस्तु तन्त्वादिगुणजन्यगुणवत्तां गृह्णन्तीति न ते तन्त्वादिभ्यो भिन्ना भवितुं प्रभवन्तीति न रमणीयम्, तन्तुगुणेभ्यः पटगुणोत्पत्तिं स्वीकुर्वाणेन पटे तन्तुभेदस्य

वारयितुमशक्यत्वात्। न हि पटस्य तन्तुभिन्नत्वं विना पटगुणानां तन्तुगुणोत्पाद्यत्वं सम्भवति। न खलु तन्तुगुणास्तन्तुगुणैरारभ्यमाणाः कदाचिददर्शिषत।

पटादयो न तन्त्वादिभिन्नास्तन्त्वादिसंयोगं विनाऽनुत्पद्यमानत्वात्, यत्कार्यं यस्मादतिरिच्यते तत् तदीयसंयोगमन्तरेणापि भवति तन्तुभिन्नकटवत्, पटादयः पुनर्न तन्त्वादिसंयोगमन्तरेण जायन्त इति न ते तेभ्यो भिन्ना इत्यपि वक्तुमशक्यम्, पटस्य तन्तुभिन्नत्वमनभ्युपगम्य पटो न तन्तुसंयोगं विना भवति किन्तु तन्तुसंयोगमपेक्ष्यैव भवतीत्यादेर्भणितुमक्षमत्वात्। न खलु पटो न तन्तुसंयोगं विना भवतीति वाक्यस्य तन्तुर्न तन्तुसंयोगं विना भवतीत्यर्थः शक्यः प्रतिपादयितुम्।

पटादयो न तन्त्वादिभिन्नास्तैरुत्पाद्यमानत्वात्, ये यतो भिन्नाः न ते तैः प्रादुर्भाव्यन्ते, यथा न तन्तुभिः कटो निष्पाद्यते, निष्पाद्यन्ते च पटादयस्तन्त्वादिभिरिति न ते तन्त्वादिभिन्नाः। एतदभिधानमपि नानुमोदयितुमर्हं "ये यतो भिन्ना न ते तैः समुत्पाद्यन्ते" इति नियमस्यासिद्धत्वात्, तुरीभिन्नानामपि पटानां तुरीभिर्भाव्यतया व्यभिचाराच्च। पटादिषु तन्त्वादिभेदमस्वीकृत्य पटादीनां तन्तूत्पाद्यत्वप्रतिपादनमपि सम्भावनाऽतीतम्।

ननु न वयमवयविषु तादात्म्यमवयवानामुपसंहरामः, परमिदं व्याहरामो यत् कलशवसनाद्यारम्भकसंयोगशालिनः कपालतन्त्वादय एव शरीरप्रावरणजलाहरणादि कार्यं सम्पादयिष्यन्तीति तदतिरिक्तकलशाद्यवयविकल्पना विफला, तत्प्रागभावध्वंसादीनां कल्पने गौरवारम्भश्चेत्येतदपि न प्रेक्षावताम्प्रमोदप्रदाने दक्षम्—

तथा हि पुरोदीरितरीतेरादरे संयोगविशेषविशिष्टाः कपालिकांशुप्रभृतय एव कपालादिभावं भजन्तस्तत्करणीयं करिष्य-

न्तीति कपालादयोऽपि कपालिकाद्यतिरिक्ताः न सेत्स्यन्ति। प्रणालिकायाश्चैतस्या अनुमोदने संयोगविशेषविशिष्टपरमाणुसंज्ञकद्रव्यसङ्घातस्यैव घटाद्यात्मकतायाः स्वीकरणीयताऽऽपत्त्या सर्वेषामेव घटपटादिद्रव्याणां तद्गुणादीनाञ्च प्रत्यक्षापत्तेः। प्रत्यक्षविषयता हि महत्त्वोद्भूतरूपादिभिर्भवति, महत्त्वञ्च प्रत्येकानतिरिक्ते परमाणुमण्डले कथमपि न सम्भवति।

न च दूरतरे स्वल्पप्रकाशमये वा प्रदेशे स्थितिभाजः केशस्यैकस्याप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्ववत् परमाणुसमूहस्य प्रत्यक्षत्वं समर्थयितुं शक्यम्, केशस्य योग्यतया परमाणोश्चायोग्यतया दृष्टान्तदार्ष्टान्तिकयोरतिवैषम्यात्।

नन्ववयवावयविभावाभ्युपगमपक्षे महत्त्वस्य प्रत्यक्षत्वप्रयोजकता नाभ्युपेयते किन्तु स्थूलावयविप्रयोजकत्वेनाभिमतसंयोगस्यतादृशसंयोगविशिष्टपरमाणुसङ्घातत्वस्यैव वा। तथा च न घटादीनां प्रत्यक्षत्वानुपपत्तिर्न वा घटादावेकत्वप्रतीतेरनुपपत्तिः। उक्तसङ्घातत्वगतैकत्वस्यैव परम्परया परमाणुषु प्रतीतिसम्भवादिति चेन्न घटाद्यारम्भकत्वेनाभिमतानामनन्तानां परमाणुसंयोगानां परस्परनैरपेक्ष्येण प्रत्यक्षत्वप्रयोजकतास्वीकारे घटादिप्रयोजकसंयोगघटकानां द्वित्राणामपि संयोगानां सद्भावे घटादिप्रत्यक्षापत्तेः।

परस्परापेक्षया च तत्स्वीकारे विनिगमनाविरहेण सर्वेषामेव संयोगानां तथाभावापत्त्या गुरुतरानन्तकार्यकारणभावकल्पनापत्तेः।

तादृशसंयोगविशिष्टपरमाणुसङ्घातत्वमपि प्रत्यक्षत्वप्रयोजकं न भवितुमर्हति, तस्य संख्यारूपताया अपेक्षाबुद्धिविषयतात्मकताया वेन्द्रियपथातीतेषु परमाणुषु "अयमेकोऽयमेक" इत्येवंरूपापेक्षाबुद्धेरसम्भवेनासम्भवात्। कथञ्चित् सम्भवेऽप्यानुमाति-

क्यादेरपेक्षाबुद्धेस्तद्विनिवृत्तिविनिवर्तनीयायां संख्यायां तत्समायुष्कतदीयविषयतायां वा व्यपगतायां प्रत्यक्षप्रयोजकवैकल्येन घटादीनां प्रत्यक्षत्वानुपपत्तेः । एकस्मिन् घटेऽपि पुरुषभेदभिन्नापेक्षाबुद्धिप्रसूतबहुतरसंख्यानां, परमाणुभेदभिन्नानां स्वरूपसम्बन्धविशेषात्मिकानामपेक्षाबुद्धिविषयतानाञ्चानेकासां विनिगमनाविरहेण हेतुभावापत्त्याऽनन्तकार्यकारणभावकल्पनाऽऽपत्तेः ।

किञ्च घटादेरारम्भकपरमाणुसमुदायात्मकत्वेऽयमेको महान् धान्यराशिरितिवदयमेको महान् परमाणुराशिरित्येवंविधप्रत्यक्षापत्तिः । घटविषयकप्रतीतिविषयताया अनन्तपरमाणुषु कल्पने गौरवञ्च ।

अपरञ्च यदि घटादेः परमाणुभिन्नत्वं नाभ्युपेयते तदा जलाहरणादेरनुपपत्तिः । तथा हि—जलाहरणादिकं प्रति संयोगानपेक्षया परमाणुसङ्घातत्वेन हेतुत्वेऽसंयुक्तेभ्योऽपि परमाणुभ्यो जलाहरणप्रसङ्गः । संयोगापेक्षया हेतुत्वे च संयोगस्यानन्त्येन कार्यकारणभावानन्त्यम् । अपोहरूपं घटत्वमपि न कारणतावच्छेदकं सम्भवति, एकस्याः घटव्यक्तेर्विरहेण संयुक्ततत्तत्परमाणुव्यक्तिभेदकूटवद्भेदस्यैवापोहरूपघटत्वात्मकतया संयुक्तपरमाणुभ्योऽसंयुक्तपरमाणूनामभिन्नतया तादृशापोहरूपघटत्वस्यासंयुक्तपरमाणुसाधारण्येनासंयुक्तपरमाणुभ्योऽपि जलाहरणप्रसङ्ग इति न कामयमानेनापि भवता नूनमेव घटादेः परमाणुभिन्नत्वमभ्युपेयम् । प्रतीतिबलेन कपालादिभिन्ने कलशादौ सिद्धे तत्प्रागभावध्वंसादिकल्पनाकृतं गौरवं फलमुखतया न दूषणावहम् ।

नन्ववयवभिन्नावयविस्वीकारे पादपप्रभृतेः पुरोभाग एव चक्षुःसंयुक्तत्वेनोपलब्धतया पृष्ठभागे चानुपलब्धतया एकस्मिन्नुपलब्धानुपलब्धत्वरूपविरुद्धधर्मयोरध्यासप्रसङ्ग इति चेन्न, पुरोभागावच्छेदेन पादपे चक्षुःसन्निकृष्टे समुपलब्धताया एव

स्वीकारात्। अनुपलब्धतायास्तु तस्य पृष्ठभागात्मकेऽवयवेऽभ्युपगमात् तस्य चावयविनः पादपादतिरिक्तत्वात्।

यत्तु अवयविनोऽवयवातिरिक्तता न सम्भवति वृत्तित्वानुपपत्तेः। तथाहि अवयविनो यत्किञ्चिदेकावयवमात्रे सद्भावोऽभ्युपेयते सर्वस्मिन्नवयवे वा? नाद्यः, अवयवान्तरवैयर्थ्यप्रसङ्गात्। नान्त्यो विकल्पासहत्वात्। तद्यथा-अवयविनः प्रत्येकस्मिन्नवयवे वृत्तित्वं साकल्येन वा स्यादेकदेशेन वा? न प्रथमः स्तोकतरपरिमाणशालिन्यवयवे ततोऽतिशयम्परिमाणमाश्रयतोऽवयविनस्साकल्येन सद्भावासम्भवात्। नाप्यपर एकदेशस्यावयवरूपतया स्वस्य स्वनिरूपितवृत्तितानवच्छेदकतया चाधिकरणीभूतेऽवयवे तदवयवात्मकैकदेशेन, अवयवान्तरेऽवयवान्तरस्यावृत्तितयाऽवयवान्तरावच्छेदेन च वर्तनासम्भवात्। अवच्छेदकीभूतैकदेशान्तरकल्पना त्वनवस्थाऽऽपत्तिपराहता। तत्तुच्छम्, तत्तदवयविनस्तदीयावयवेषु व्यासज्यवृत्तितायाः स्वीकारात्, तस्याश्च निसर्गतो निरवच्छिन्नत्वाभ्युपगमेन व्याप्यवृत्तिनियतस्यावच्छेदकप्रश्नस्य तत्रानुत्थाननिहतत्वात्। न चैवमवयविनः प्रत्यक्षानुपपत्तिर्व्यासज्यवृत्तेर्यावदाश्रयप्रत्यक्ष एव प्रत्यक्षत्वनियमादिति वाच्यम्, अद्रव्यत्वोपाधिपीडिततया तन्नियमस्याव्यवस्थानात्।



## समवायसम्बन्धसाधनम्—

अथ परमाणुभ्यो द्व्यणुकादिक्रमेण जगतामुत्पत्तिपक्षस्तदैव व्यवतिष्ठेत यद्युपादानोपादेययोः परस्परं कश्चित् समुचितस्संसर्गस्सम्पद्येत। स च सुचिरञ्चिन्त्यमानोऽपि चारुतया नोपपद्यते। न च नेदं युज्यते वचनं तथाविधस्य समवायनाम्नः सम्बन्धस्य न्यायवैशेषिकप्रबन्धेषु नितान्तं प्रसिद्धत्वादिति वाच्यं प्रभूतं पराक्रमताऽपि तार्किककुलेन प्रमाणपरीक्षणपाषाणैस्तदीयनिर्दोषताया अद्याप्यनिरूपणात्।

तथा हि गुणादिप्रकारकप्रतीतिपक्षकसप्रकारकप्रत्ययत्वलिङ्गकानुमानेन विशेष्यविशेषणयोः सम्बन्धभावेन तत्सिद्धिं निरुपद्रवां मन्यन्ते नैयायिकाः। परमेवं सिध्यतस्सम्बन्धस्यातिरिक्तता तदैव संगच्छेत यदि प्रणिगदितानुमाने पक्षभावं भजन्ती प्रतीतिः प्रतिपन्नसम्बन्धविषयितया न स्वरूपं लभेत। किन्तु लभत एव सा। तथा हि संयोगत्वे द्रव्येतरासम्बन्धत्वनियमेन संयोगस्य, महाकाले तत्परिच्छेदके स्पन्दादौ च रूपादिप्रकारकबुद्धेः प्रमात्वस्य कालिके कालातिरिक्तनित्यानुयोगिकत्वव्यपायेनात्मादौ ज्ञानादिमत्त्वबुद्धेरनुपपत्तेश्च प्रसङ्गभयेन कालिकस्य, महादिशि तदुपाधौ वाय्वादौ च रूपादिमत्तामतेर्याथार्थ्यस्य दिक्कृतविशेषणतायां मूर्तमहादिग्भिन्नाननुयोगिकत्वनियमेनात्मप्रभृतौ ज्ञानादेः गुणादौ जातेश्च प्रतीत्यनुपपन्नतायाः प्रसक्तिभयेन च तस्याः, द्रव्यगुणाद्योः परस्परेतरत्वेन तादात्म्यस्य, तत्तदभावानात्मत्वेन प्रतियोगितायाः, विषयविषयिभावानियमेन विषयताया वाच्यवाचकभावाद्यनियमेन शक्त्यादेश्च सम्बन्धविधयाऽनवगाहनेऽपि स्वरूपस्य सम्बन्धविधयाऽवगाहने बाधाभावेन समवायस्य साधनं सर्वथैवासम्भवमेव।

न च न भवतु समवायस्तथाऽपि नारम्भवादो विपद्यतेऽवयवावयविनोर्मिथः स्वरूपसम्बन्धस्वीकारेणापि सामञ्जस्यसम्भवा-

दिति वाच्यम् अवयवेभ्यो नितान्तं भिन्नोऽवयवी तेषु समवायेन निवसतीति सुप्रसिद्धस्य न्यायसिद्धान्तसौधस्य धूलिभावप्रसङ्गात्।

न च गुणादिमत्त्वप्रतीतेः स्वरूपसम्बन्धविषयकत्वकल्पनं न युक्तं प्रभूततराणां स्वरूपाणां सम्बन्धत्वकल्पनायां महागौरवेण षष्ठपदार्थात्मनः समवायस्यैवैकस्य सम्बन्धत्वेन कल्पने लाघवादिति वक्तव्यं भवत्सम्भावितगौरवस्यानवतारात्। तथा हि कीदृशं गौरवं सम्भाव्यते भवता? सम्बन्धताया नानानिकेतनकल्पनानिबन्धनं वा, सम्बन्धताया नानात्वकल्पनानिबन्धनं वा, गणनातिगेषु सम्बन्धतासम्बन्धकल्पनानिबन्धनं वा? तत्र तावत् प्रथमन्नाधातुमर्हति पदं समवायसम्बन्धवादिभिस्तदाश्रयत्वेनाभिमतेभ्यो भिन्नस्यैकस्याप्यभिनवस्याश्रयस्य स्वरूपसम्बन्धवादिभिरनभ्युपगमात्।

द्वितीयमपि गौरवं गौरवास्पदीभवितुन्न प्रभवति समवायपक्षेऽपि संसर्गतानानात्वस्य निरोधासम्भवात्। सम्बन्धभेदेन स्वरूपगतायाः संसर्गताया इव सम्बन्धिभेदेन समवायगताया अपि संसर्गतायाभेदस्यावश्यकत्वात्। यतो हि नैष निदेशो दिवस्पतेरद्यावधि दृष्टौ प्रविष्टो यत् सम्बन्धभेद एव संसर्गतां भिन्द्यान्न सम्बन्धिभेद इति। तृतीयमपि गौरवं गोपनीयतान्नालम्बते। यतो हि गौरवमिदं सम्बन्धतासम्बन्धानामनेकत्वमूलकमेवाभिप्रेतव्यं न तु तदाश्रयानेकत्वहेतुकमन्यथा प्रथमाविशेषप्रसङ्गात्, तच्च समवायपक्षेऽपि सम्बन्धताया अनेकतया तत्सम्बन्धानामनेकत्वस्य दुष्परिहरत्वेन निर्विशेषम्। समवायवादे सम्बन्धता नानेकेति तु न शक्यकथनं सम्बन्धताभेदानङ्गीकारे सर्वेषां समवायस्यैकतया सम्बन्धसत्तायाः सम्बन्धिसत्ताव्याप्यतया च सर्वेषु समवायिषु सर्वसमवेतवत्ताप्रसङ्गात्।

अत्रोच्यते—

गुणादिमत्त्वप्रतीतेः स्वरूपसंसर्गावगाहनेनोपपादनं दुःशकं स्वरूपस्यानन्तत्वेन तत्रानेकसंसर्गताकल्पननिबन्धनगौरवस्यान-

पलपनीयत्वात् । न च समवायवादेऽपि सम्बन्धिभेदमूलिकायाः संसर्गताऽनेकताया उक्ततया नेदं दूषणमुद्भावनार्हमिति वाच्यं संसर्गताया विषयताविशेषरूपतया विषयतायाश्च स्वरूपसम्बन्धविशेषात्मकतयाऽऽश्रयभेदेन स्वरूपगतसंसर्गताया भेदस्यावश्यकत्वेऽपि समवायस्याभिन्नतया तद्गतसंसर्गताया आश्रयभेदप्रयुक्तभेदत्वासम्भवात् । सम्बन्धिभेदेन सम्बन्धताभेद इत्युक्तिस्तु युक्तिरहिता संसर्गतायास्तदनात्मकत्वात् ।

ननु यदि सम्बन्धिभेदेन समवायगतसंसर्गताभेदो नाभ्युपेयते समवायोऽपि रूपस्पर्शादीनामभिन्न एवोपगम्यते तदा पवनस्य स्पर्शसमवायसदनत्वेन रूपसमवायवत्ताया अपि तत्रावश्यं सद्भावेन तस्य रूपवत्त्वप्रसङ्गो दुर्निवारः स्यात् । तत्र यद्यपि प्रसङ्गोऽयं "यो यदीययत्सम्बन्धवान् स तेन सम्बन्धेन तद्वान्" इति व्याप्तिबलेन नावतरीतुमर्हति, कुण्डसंयोगिनि बदरे संयोगसम्बन्धेन कुण्डवत्त्वाभावेन कथितव्याप्तेरेवाभावात् । नापि "यो यत्प्रतियोगिकयत्सम्बन्धवान् स तेन सम्बन्धेन तद्वान्" इति व्याप्तिबलेनापि, कुण्डबदरयोः संयोगस्य कुण्डप्रतियोगिकत्वाभावेनोक्तदोषाभावेऽपि तत्संयोगस्य बदरप्रतियोगिकतया बदरवृत्तितया च बदरे तत्प्रतियोगिकतत्सम्बन्धस्य तेन सम्बन्धेन तद्वत्ताव्यभिचारित्वात् । तथाऽपि बदरप्रतियोगिकत्वविशिष्टसंयोगस्य बदरे वैकल्यादसम्भवद्गुणितदूषणायाः "यो यत्प्रतियोगिकत्वविशिष्टयत्सम्बन्धवान् स तेन सम्बन्धेन तद्वान्" इति व्याप्तेर्बलेन स स्यादेव, रूपप्रतियोगिकत्वविशिष्टसमवायस्य स्पर्शप्रतियोगिकत्वविशिष्टसमवायाभिन्नतया स्पर्शप्रतियोगिकत्वविशिष्टसमवायशालिनि समीरणे रूपप्रतियोगिकत्वविशिष्टसमवायस्याप्यावश्यकत्वात् ।

यच्चात्रेदमुच्यते यदुक्तसमवाययोरभेदेऽपि रूपप्रतियोगिकत्वविशिष्टसमवायत्वावच्छिन्नाधेयतानिरूपिताधारताया वायौ विर-

हेण व्याहृतः प्रसङ्गो न संगच्छते तदा रूपाद्यात्मकसम्बन्धिभेदेन तत्तत्प्रतियोगिकत्वविशिष्टसमवायत्वावच्छिन्नानामनेकसंसर्गतानां दुर्वारतया स्वरूपस्य सम्बन्धताऽपेक्षयाऽस्मिन् पक्षे लाघवाभावेन समवाय एव विलीयेतेति चेन्न, रूपादिप्रतियोगिकत्वविशिष्टसमवायानां समवायत्वमात्रेणैव संसर्गत्वाभ्युपगमेन संसर्गताया नानात्वासम्भवात्, समवायेन रूपवत्तानियामिकाया रूपप्रतियोगिकत्वविशिष्टसमवायत्वाच्छिन्नवत्तायाः पवनेऽभावेन प्रोक्तप्रसङ्गावतरणासम्भवाच्च ।

न च तद्धर्मावच्छिन्नसम्बन्धेन तद्वत्तायास्तत्प्रतियोगिकत्वविशिष्टतद्धर्मावच्छिन्नवत्तानियम्यत्वं तद्धर्मावच्छिन्नाधिकरणतास्तत्प्रतियोगिकत्वविशिष्टतद्धर्मावच्छिन्नाधिकरणताया वैलक्षण्यं चाप्रामाणिकमिति शङ्कनीयं "यो यत्प्रतियोगिकत्वविशिष्टयद्धर्मावच्छिन्नवान् तद्धर्मावच्छिन्नसम्बन्धेन स तद्वान्" इति व्याप्तेस्तादृशाधिकरणतयोर्वैलक्षण्यस्य चावश्यं स्वीकार्यत्वात् । अन्यथा बदरे बदराधिकरणत्वापत्तेः कथमपि वारयितुमशक्यत्वात् ।

## अत्र वेदान्तिनः पक्षमेनमेवं प्रतिक्षिपन्ति—

समवाये रूपप्रतियोगिकत्वस्य समीरणे समवायवत्त्वस्य चाप्रतिहतत्वेन रूपप्रतियोगिकत्वविशिष्टसमवायत्वावच्छिन्नवत्त्वाभावो वायौ वक्तुमनर्हो विशिष्टाधिकरणताविधुरत्वेन विवक्षिते विशेष्यवत्तायाः विशेष्ये विशेषणवत्ताया वा विरहं विना विशिष्टाधिकरणताविरहस्य कुत्राप्यदर्शनात्, परमिदं दूषणं वेदान्तिभिर्न शक्योद्भावनमेतादृशदोषस्य तत्पक्षेऽपि विद्यमानत्वात् । तथा हि ब्रह्मणोऽज्ञानाश्रयत्वमते तस्याज्ञत्वापत्तिपरिहाराय आवरणशक्तिविशिष्टाज्ञानत्वावच्छिन्नाधिकरणतामज्ञतानियामिकां मत्वा ब्रह्मणि च तामस्वीकृत्य स्वकीयं पक्षन्ते स्वच्छयन्ति, अत उक्तन्दोषमुद्भावयन्तस्ते प्रष्टव्या भवन्ति यदज्ञान आवरणशक्तेः ब्रह्मण्यज्ञानस्य च यावदखण्ड-

ब्रह्मसाक्षात्करणमक्षुण्णतया कथन्तत्रावरणशक्तिविशिष्टाज्ञानत्वावच्छिन्नाधेयतानिरूपिताधिकरणता न स्यात्, सत्याञ्च तस्यां कथमिवाज्ञत्वापत्तिस्तस्य परिह्रियेत।

किञ्चैवं बदरे कुण्डबदरसंयोगस्य संयोगे च तस्मिन् बदरप्रतियोगिकत्वस्यानपायेन बदरप्रतियोगिकत्वविशिष्टत्वावच्छिन्न तत्संयोगाधिकरणताया बदरेऽभावासम्भवेन बदरे बदरवत्त्वापत्तिस्तैरपि कथं वार्येत। न चानिर्वचनीयताकवचाञ्चितकलेवराणान्तेषान्न तादृशस्त्रासलेशोऽपीति युक्तं वचस्तस्य समरात्पलायितस्य स्वापत्नीशाटिकान्तरालनिलयनसमानत्वात्। अतो यथा सत्तायां गुणकर्मान्यत्वसामानाधिकरण्यरूपतद्वैशिष्ट्यस्य गुणकर्मणोः सत्तायाश्च सत्त्वेऽपि तयोः गुणकर्मान्यत्वविशिष्टसत्ताधिकरणता न भवति सत्तायां गुणकर्मान्यत्वसामानाधिकरण्यस्य गुणवृत्तित्वावच्छेदेनाभावात्, तथैव समवाये रूपप्रतियोगिकत्वस्य वायौ समवायस्य च सत्त्वेऽपि तत्र रूपप्रतियोगिकत्वविशिष्टसमवायवत्त्वं न भवति वायुवृत्तित्वावच्छेदेन तत्र रूपप्रतियोगिकत्वानङ्गीकारात्। यद्वृत्तित्वावच्छेदेन यत्र सम्बन्धे यत्प्रतियोगिकत्वं तत्प्रतियोगिकत्वाविशिष्टतत्सम्बन्धवत्त्वस्य तत्रैव स्वीकारात्।

किञ्च स्वरूपं गुणादिसम्बन्धपदेऽभिषिच्य समवायमन्यथयतां मूर्ध्नि दुर्वारोऽपरोऽप्येष दोषदण्डो निपतति यद् द्रव्याद्यात्मकविशेष्यगुणाद्यात्मकविशेषणयोरेकतरमात्रस्वरूपस्य कस्यचित् सम्बन्धत्वं विनिगमनाविरहेण न भवितुमर्हत्युभयस्वरूपस्य सम्बन्धत्वकल्पने च महद् गौरवमभ्युदियादिति तदपेक्षया "क्लृप्तेषु विनिगमनाविरहेऽतिरिक्तकल्पनैव गरीयसी" इति न्यायाद् विशेष्यविशेषणव्यतिरिक्तस्यैकस्य समवायस्यैव कल्पना कमनीया।

## वैशिष्ट्यस्याभावसंसर्गतानिरासः

नन्वेवं गुणक्रियादिविशिष्टबुद्धेरनुरोधेन लाघवाद् विशेष्य-विशेषणव्यतिरिक्तैकसमवायाभ्युपगमवद् भूतलादौ घटाभावादि-मत्ताबुद्धेरनुरोधेनाभावानामपि लाघवाद् विशेष्यविशेषणाभ्यां व्यतिरिक्तो वैशिष्ट्यसंज्ञक एक एव सम्बन्धोऽभ्युपगम्येतेति चेन्न, अतिरिक्तत्वेनाद्वितीयत्वेन चाभावसम्बन्धतयाऽऽपाद्यमानस्य वैशि-ष्ट्यस्य नित्यानित्यविकल्पतटिनीं तरीतुमक्षमत्वात्। तथा हि तद् यदि नित्यं स्यात्तदा घटाभाववति देशे घटानयनोत्तरमपि घटाभा-ववत्ताबुद्धिः प्रसभं प्रसज्ज्येत, घटाभावतत्सम्बन्धयोरुभयोरेव नित्यतया निराबाधात्। घटाभावविरोधिनो घटस्योपस्थितत्वान्न तथाऽऽपत्तिरिति तु दुराशामात्रं कथितेन पथा घटाभावस्यापि तत्राप्रतिहतत्वात्। घटानयनदशायां घटाभावस्य नष्टत्वान्नोक्ता-पत्तिरित्येषापि कथा न साधीयसी क्वचिदेकत्र घटानयने तदभाव-स्य नाशेऽनानीतघटेऽपि देशे तदभावबुद्धेरनुदयप्रसङ्गात्। एकत्र विध्वस्तस्यान्यत्रापि वर्तनासम्भवात्। अधिकरणभेदेनाभाव-स्य भिन्नतयैकस्याभावस्य विनाशो न विपत्कर इत्यपि न वाच्यमे-कप्रतियोगिकस्याप्यभावस्याधिकरणभेदेन भिन्नतायास्तद्ध्वंसप्रा-गभावादेश्च कल्पनेऽतिगौरवेण वैशिष्ट्यप्रणयपरित्यागस्यैवौचि-त्यात्। अस्त्वेकप्रतियोगिकोऽभाव एक एव नानाधिकरणेषु नित्य-श्च, तदीयं वैशिष्ट्यमपि नित्यमेव किन्तु वैशिष्ट्यीयसम्बन्धस्या-नित्यतास्वीकारेण नोदीरितदूषणावसर इत्याद्यपि वचनं नाभिनन्द-नीयमनन्तानां वैशिष्ट्यीयसम्बन्धानां तद्ध्वंसप्रागभावादीनाञ्चा-नन्तानां कल्पने महागौरवात्। वैशिष्ट्यस्यानित्यतापक्षस्तु महागौरवग्रस्त इति त्वापामरप्रसिद्धम्।

वेदान्तिनः पुनरत्रेदमाचक्षते—

अभाववैशिष्ट्ये नित्य एव निजीकर्तव्ये। वैशिष्ट्यस्य सम्बन्धता तु स्वरूपस्य तत्तत्कालविशिष्टभूतलत्वादिनेव तत्तत्कालविशिष्टवैशिष्ट्यत्वेनाभ्युपेतव्येति घटानयनकालस्य सम्बन्धघटकभावाभाजनत्वेन घटस्यानयनानन्तरं न तदभाववत्ताबुद्धिप्रसङ्गः घटाभाववत्तानियामकस्य घटानयनकालातिरिक्तकालघटितवैशिष्ट्यस्य घटानयनकालेऽभावात्। परमिदमप्यविचाररमणीयम्, घटाभाववति पटाश्रयदेशे पटाभावबुद्धिप्रसङ्गात्, तदानीं तत्र घटाभावप्रत्यक्षानुरोधेन तत्कालविशिष्टवैशिष्ट्यस्य तत्र घटाभावसम्बन्धताया अवश्यं स्वीकार्यत्वात्, एकस्यैव वैशिष्ट्यस्य सर्वाभावसम्बन्धतया घटाभावीयवैशिष्ट्यस्य पटाभावीयसम्बन्धताया अपरिहार्यत्वात्। न च स्वरूपसम्बन्धपक्षेऽप्येष दोषो दत्तपद एव। तथाहि यत्र देशे घटाभावः पटाभावश्च साक्षात्क्रियेते तद्देशस्वरूपस्य घटपटाभावसम्बन्धताया नूनं वाच्यतया पटानयनेऽपि तत्र तदभावो दृश्येत घटाभावप्रत्यक्षोपपत्तयेऽवश्यं स्वीकरणीयस्य तद्देशस्वरूपसम्बन्धस्य पटाभावसम्बन्धताभाजस्तदानीमपि तत्र सत्त्वात्। तद्वारणाय कस्यचिदुपायस्य चिन्तने तेनैव वैशिष्ट्यपक्षेऽपि तद्दोषदूरीकरणसम्भवादिति वाच्यं, सिद्धान्ते तत्तत्कालीनतत्तदभावस्वरूपाणामेव तत्तदभावसम्बन्धतास्वीकारेण घटाभाववति पटवति पटाभावप्रत्यक्षस्य घटाभावपटाभावयोरधिकरणे पटानयनकाले तदभावप्रत्यक्षस्य वाऽपत्तेरभावात्। तद्देशविशेष्यकपटाभावप्रकारकप्रत्यक्षकालीनपटाभावस्यैव तद्देशानुयोगिकपटाभावप्रतियोगिकसम्बन्धताऽभ्युपगमात्। घटाभावपटाभावयोराश्रये पटानयनकाले तद्देशधर्मिकघटाभावप्रत्यक्षकालीनघटाभावस्वरूपस्य घटाभावसम्बन्धस्य सत्त्वेऽपि तद्देशधर्मिकपटाभावप्रत्यक्षकालीनपटाभावस्वरूपात्मनः पटाभावसम्बन्धस्याभावात्।

नच तदानीं तत्र तादृशस्य पटाभावसम्बन्धस्यासत्त्वं न पटाभावासत्त्वनिबन्धनं भवितुमर्हति, अत्यन्ताभावस्य नित्यतया पटानयनकालेऽपि तस्यानपायात्, किन्तु तत्र पटाभावप्रत्यक्षकालस्यैव तदानीमसत्त्वनिबन्धनं तद् भवितुमर्हति तथा च तद्देशधर्मिकतदभावप्रत्यक्षकालीनतद्देशस्वरूपस्यापि तदभावसम्बन्धत्वे न काचित् क्षतिः । एवञ्च तदभावतदधिकरणयोस्तादृशयोस्तदभावस्य स्वरूपसम्बन्धत्वकल्पनापेक्षयाऽतिरिक्तस्य वैशिष्ट्यस्यैवैकस्य तद्देशधर्मिकतदभावप्रत्यक्षकालीनवैशिष्ट्यत्वेन तदभावसम्बन्धत्वकल्पनायां लाघवं निष्प्रत्यूहमिति वाच्यं तादृशवैशिष्ट्यत्वेन सम्बन्धत्वाभ्युपगमे संसर्गतानानात्वप्रसङ्गात् । वैशिष्ट्यत्वमात्रेण संसर्गत्वे च घटाभावपटाभावयोर्वैशिष्ट्ये कालभेदेन भेदस्य वक्तुमशक्यतया घटपटाभावद्वयवति देशे पटानयनेऽपि तदभावप्रत्यक्षप्रसक्तेः । वैशिष्ट्ये समवायसामान्यन्यायता तु दुर्वचा तत्र रूपादिप्रतियोगिकत्वविशिष्टसमवायस्य समवायत्वमात्रेण रूपादिसंसर्गताया उपपादनस्य कृतत्वात् ।

न च समवायस्यैकत्वेऽपि यथा रूपसमवायसदनेऽपि पवने रूपप्रतियोगिकत्वविशिष्टसमवायाधिकरणत्वाभावान्न तत्र रूपवत्ता तत्प्रमा वा, तथा घटशून्ये पटवद्देशे तद्देशधर्मिकपटाभावप्रत्यक्षाधिकरणकालविशिष्टवैशिष्ट्याधिकरणत्वाभावान्न तत्र तदानीं पटाभाववत्तायास्तत्प्रत्यक्षस्य वा प्रसङ्ग इति वाच्यं घटशून्ये पटवति घटाभावप्रत्यक्षकाले पटशून्ये देशान्तरे पटाभावप्रत्यक्षस्य जायमानतयास्तदनुरोधेन तत्कालविशिष्टवैशिष्ट्यवत्तायाः पटाभाववत्तानियामकत्वस्यावश्यकतया तस्याश्च पटवत्यपि सत्त्वेन तत्र पटाभाववत्त्वस्य तत्प्रत्यक्षस्य च पटसत्त्वदशायामप्यपरिहार्यत्वापत्तेः । यस्मिन् काले यस्मिन् देशे यदभावस्य प्रत्यक्षं तद्देश एव तत्कालविशिष्टवैशिष्ट्यस्य तदभावसम्बन्धत्वमित्यभ्युपगमे न

कश्चिद्दोष इत्येतदपि दुःस्वप्नमात्रं कालदेशभेदेन संसर्गताभेदस्यानिवार्यत्वे स्वरूपसम्बन्धोपेक्षाया अनिर्बीजत्वप्रसङ्गादित्यलं पल्लवेन ।

## समवायस्य सम्बन्धान्तरसापेक्षतानिरासः—

अथ सम्बन्धिभ्यां सर्वथा विभिन्नः समवायः सम्बन्धिभ्यामसम्बद्ध एव सम्बन्धिनौ सम्बन्धयत्याहोस्वित्सम्बद्धः ? नाद्योऽनवद्यो गदनार्हस्तथा सति तस्य समग्रस्य जगत एव मिथोमेलकत्वं स्यान्न तु नियमतः कयोश्चिदेव । द्वितीयोऽपि पक्षो न स्वच्छं समुच्छलनमर्हति स्वसम्बन्धिनोः सम्बन्धने समवायस्य सम्बन्धरापेक्षावत् समवायप्रतियोगिकसम्बन्धस्य समवायसम्बन्धने सम्बन्धान्तरापेक्षाया एव समवायसम्बन्धसम्बन्धस्य तत्सम्बन्धस्य तत्सम्बन्धसम्बन्धादेश्च स्वस्वप्रतियोगिनां सम्बन्धनार्थं सम्बन्धरापेक्षाया आवश्यकतयाऽनवस्थाप्रसङ्गात् ।

सम्बन्धिनौ योजयितुं प्रमाणमहिम्ना सिद्धः समवायः सम्बन्धान्तरमनपेक्ष्यैव तयोर्मेलनं निर्वर्तयति तस्यैव तत्कल्पनायाः परमप्रयोजनत्वादिति स्वीकारोऽपि नोत्सवाय प्रभवति, तुल्यन्यायेन संयोगस्यापि समवायनिरपेक्षस्यैव सम्बन्धिसम्बन्धकतायाः सम्भवेन संयोगस्य संसर्गतानियामकसम्बन्धत्वं श्रीमद्भिरभ्युपगतं समवाये न सिध्येत्, इत्येषापि न शोभना वाक्, सम्बन्धिभ्यां स्वरूपेण सम्बद्धस्यैव समवायस्य सम्बन्धिसम्बन्धनसम्पादकत्वसम्भवात् । संयोगस्यापि तर्हि स्वरूपेणैव सम्बन्धिसम्बद्धस्य सम्बन्धिसम्बन्धकत्वमस्तु न तु समवायेनेत्यपि नोद्यं नाभिनन्द्यं संयोगस्वरूपाणामसंख्यतया संख्यातिगेषु संयोगेषु स्वरूपत्वावच्छिन्नसंसर्गताकल्पने महागौरवात् । समवायस्य चैकतया तत्स्वरूपस्य संसर्गतास्वीकारे गौरवविरहात् । स्वरूपेण समवायस्य संसर्गत्वे संयोगस्यापि तदेव युक्तमित्यत्र युक्तिविरहोऽपि । यतो हि नायम्

नियमो यज्जगति यादृशः कश्चिदेकः पदार्थो दृष्टस्सर्वैरपि तादृशैरेव भवितव्यम्। अन्यथा वेदान्तिवर्गैरभ्युपगतस्य ब्रह्मण इव सर्वस्यापि चेतनत्वं स्याज्जगत इव तस्यापि वा मिथ्यात्वादिकं स्यात्।

समवायस्वरूपस्य समवायादभिन्नतया कथन्तस्यैव सम्बन्धित्वं सम्बन्धत्वं च स्यातां सम्बन्धित्वसम्बन्धत्वयोर्विभिन्नयोरेव भावादिति न देशनीयं सम्बन्धितावच्छेदकस्य समवायत्वस्य सम्बन्धतावच्छेदकस्य स्वरूपत्वस्य चान्योन्यमन्यतया तयोरेकत्रापि सम्भवात्। भिन्नयोरनुभूतस्य रूपभेदेनैकनिष्ठताया निराकरणे वेदान्तिभिरपि तत्त्वमस्यादिवाक्यजन्याया अखण्डब्रह्माकारायाश्चित्तवृत्तेरेकस्या एवाविद्यकत्वतादृशवृत्तित्वाभ्यां नाश्यनाशकभावः कथं स्वीकर्तुं शक्येत तस्य भिन्नयोरेव दर्शनात्।

## समवायनित्यताया निर्दोषत्वप्रदर्शनम्—

ननु समवायस्य सम्बन्धत्वं न युक्तं नित्यानित्यविकल्पासहत्वात्। तथा हि यदि सर्वेषां समवाय एकोऽनित्यश्च स्यात्तदा कस्यचिदेकस्य समवेतस्य नाशे समवायस्यापि सम्बन्धिनाशप्रयुक्तनाशकतया जगतः समवायशून्यत्वप्रसक्त्या समवायगोचरस्य प्रतीतिमात्रस्यैवोच्छेदः प्रसज्ज्येत। यदि च नित्यस्तर्हि कारणे कार्यसमवायरूपस्योत्पत्तिपदार्थस्य नित्यतया पूर्वमपि सत्त्वेन कारणव्यापारवैयर्थ्यम्। न च समवायस्य पूर्वं सत्त्वेऽपि तत्र कार्यप्रतियोगिकत्वस्य तदानीमभावात्तदुपपत्तय एव कारणानां सव्यापारताया आवश्यकत्वमिति वाच्यं द्रव्य एवोत्पत्तेर्नियमेन तदनात्मके समवाये कार्यप्रतियोगिकत्वोत्पत्तेरसम्भवादिति चेन्न स्वाधिकरणावृत्तिप्रागभावप्रतियोगिसमवायसम्बन्धस्य स्वाधिकरणक्षणध्वंसानधिकरणक्षणसम्बन्धस्यैव वा न्यायनय उत्पत्तिपदार्थत्वस्वीकारात् तस्य चानित्यत्वात्।

न च तथाऽपि समवायस्य नित्यता न सङ्गता सम्बन्धस्य सम्बन्धिद्वयसत्ताधीनसत्ताकत्वनियमेन सम्बन्धिनो घटादेर्नाशे समवायनाशस्य दुष्परिहरत्वात्, अन्यथा निर्दिष्टनियमस्य भङ्गप्रसङ्गात्। सर्वेषां समवायिनामनित्यत्वानङ्गीकारेण प्रलयेऽपि नित्यानां द्रव्यजात्यादीनां सत्त्वेन समवायसत्तायाः सम्बन्धिद्वयसत्ताधीनसत्ताकत्वस्योपपन्नतया नोक्तनियमस्य हानिरित्यभिधानमपि न मेधाविमनोहरम्, संयोगेऽनेकशो दृष्टस्य यदुभयनिरूपितसम्बन्धत्वं यत्र तत्र तदुभयसत्ताधीनसत्ताकत्वमिति नियमस्य रूपघटयोर्नाशेऽपि तयोस्समवायानाशे हानिप्रसक्तेर्दुर्वारत्वादिति वाच्यम् भवन्नये नित्यसम्बन्धस्यालीकतया हेतुघटकस्य यदुभयनिरूपितत्वेति विशेषणस्य व्यर्थत्वात्। रूपघटयोर्नाशदशायां समवायस्य तदुभयसम्बन्धत्वाभावात् तदुभयसम्बन्धत्वकाले तयोर्वर्तमानत्वेन कथितनियमानपायाच्च।

## तादात्म्यस्य द्रव्यादौ गुणादिसम्बन्धत्वनिरासः—

ननु समवायस्य गुणादिसम्बन्धत्वन्न यौक्तिकं प्रतिबध्यप्रतिबन्धकभावादौ गौरवापत्तेः। तथाहि समवायसम्बन्धावच्छिन्ननीलत्वाद्यवच्छिन्नप्रकारतानिरूपितघटत्वाद्यवच्छिन्नविशेष्यताकबुद्धौ समवायसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकनिश्चयत्वेनैकं प्रतिबन्धकत्वं नीलत्वावच्छिन्नावच्छेदकताकतादात्म्यसम्बन्धावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकबुद्धौ नीलत्वावच्छिन्नावच्छेदकताकतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकघटत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन चापरमिति प्रतिबध्यप्रतिबन्धकभावद्वयम्।

एवमेतादृशनिश्चयाभावद्वयस्य तन्निश्चयप्रतिबध्यबुद्धिद्वये कारणताद्वयं तादृशशाब्दद्वये तादृशयोग्यताज्ञानयोः कारणताद्वयमि-

त्यादि महागौरवमतो द्रव्यादिषु गुणादीनां तादात्म्यमभ्युपगम्य तादात्म्यसम्बन्धावच्छिन्ननीलत्वाद्यवच्छिन्नप्रकारताकबुद्धौ तादात्म्यसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकघटत्वाद्यवच्छिन्नविशेष्यताकनिश्चयत्वेनैकमेव प्रतिबन्धकत्वं तादृशनिश्चयाभावत्वेन च तत्प्रतिबध्यबुद्धावेकमेव कारणत्वमङ्गीकार्यं लाघवादिति चेन्न, समवायपक्षेऽपि समवायसम्बन्धावच्छिन्ननीलत्वाद्यवच्छिन्नप्रकारताकबुद्धौ समानधर्मितावच्छेदकसमवायसम्बन्धावच्छिन्ननीलत्वाद्यवच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकनिश्चयत्वेनैकस्या एव प्रतिबन्धकतायास्तादृशनिश्चयाभावत्वेन तत्प्रतिबध्यबुद्धावेकस्या एव कारणतायाश्च स्वीकारेणोक्तप्रकारेण गौरवानुदयात् ।

न च द्वितीयप्रतिबन्धकताऽनादरे समवायसम्बन्धावच्छिन्ननीलत्वावच्छिन्नावच्छेदकताकतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्तानिश्चयदशायामपि समवायसम्बन्धावच्छिन्ननीलत्वाद्यवच्छिन्नावच्छेदकताकतादात्म्यसम्बन्धावच्छिन्नप्रकारताकबुद्धेस्तन्निश्चयसमानधर्मितावच्छेदकिकाया उत्पत्त्यापत्तिः स्यादिति शङ्क्यम्, समवायेन नीलादिविशिष्टं तादात्म्येन प्रकारविधया विषयीकुर्वाणायां बुद्धौ समवायेन नीलादिप्रकारकत्वनियमस्य तादृशाभावनिश्चये च समवायसम्बन्धावच्छिन्ननीलत्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रकारकत्वनियमस्य स्वीकारेणोक्तापत्तेरनवतारात् ।

न च तथापि तादृशाभावद्वयकल्पनाप्रयुक्तं गौरवन्दुष्परिहरमेवेति संशङ्कितव्यं धर्मिभेदधर्मात्यन्ताभावयोर्भेदानभ्युपगमेन कथिताभावयोर्द्वैतासम्भवात् ।

अथैवमपि तादात्म्यसमवायावच्छिन्नप्रतियोगिताद्वयाभ्युपगमहेतुकं गौरवं दुर्वारमेवेति चेन्न स्वरूपसम्बन्धात्मिकायाः प्रतियोगितायाः प्रतियोगितद्भावभिन्नत्वानङ्गीकारेण नवीनस्य कस्यापि

वस्तुनोऽकल्पनात् । पुरोदीरितप्रकारेण समवायसिद्धौ सम्पन्नायां समुद्भावितगौरवाणां फलमुखतयाऽदोषत्वाच्च ।

किञ्च द्रव्यादिषु गुणादीनां तादात्म्यसम्बन्ध इति मतं महतो मतिमान्द्यस्य दुष्फलं तेषु तेषान्तादात्म्यस्यगीर्वाणगुरुणाप्यशक्य-समर्थनत्वात् । तथाहि द्रव्यादयो यदि गुणादिभ्योऽभिन्ना भवेयुस्तर्हि तेषां नाशे नूनमेव नश्येयुः। परमिदन्न भवति घटभूतलादिसंयोगनाशे पिठरपाकपक्षे पाकेन नीलादिनाशेऽपेक्षाबुद्धिनाशेन द्वित्वादिनाशे वा घटादीनां नाशस्याभावात् ।

एवं घटादीनां रूपस्पर्शादितोऽव्यतिरेके घोरतरेऽन्धकारे घटादीनामिव तद्गतनीलादीनामपि स्पार्शनोपलम्भोऽपरिहरणीयः स्यात् । त्वचो नीलादिग्रहणेऽसामर्थ्यान्नयनस्य तद्ग्रहणक्षमस्य च प्रकाशात्मकसहकारिणोऽसन्निधानान्नाभिहिताया आपत्तेरवसर इति तु न शक्यते वक्तुं द्रव्यगुणयोस्तादात्म्यपक्षे घटादिग्रहणे निपुणायास्त्वचो नीलादिग्रहणेऽसामर्थ्यस्यासम्भवात् ।

तमस्यपि नीलादयो घटात्मना गृह्यन्त एव, नीलाद्यात्मना ग्रहणाभावस्तु तथा ग्रहणे त्वचोऽसामर्थ्यादितीदमपि वचनन्न चारुताञ्चिनुते "घटाद्यात्मना गृह्यन्ते न नीलात्मना" इत्यनेन विवक्षितस्य "घटत्वादिना गृह्यन्ते न तु नीलत्वादिना" इत्येतदर्थस्यासम्भवदुक्तिकत्वात् । धर्मधर्मिणोरभेदमभ्युपगच्छता घटत्वनीलत्वाद्योर्भेदस्य स्वीकर्तुमशक्यत्वात् समानाश्रययोराश्रयाभिन्नयोश्च तयोस्तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेनैकीकरणात् ।

अथ यद्येवं निगद्यते भवता यद् द्रव्यगुणाद्योर्नात्यन्तमभेदोऽभ्युपगम्यते किन्तु भेदसहाभेदरूपं विलक्षणं तादात्म्यम् । तच्च स्वाश्रययोरेकस्य नाशे करणविशेषेण प्रत्यक्षे वा नापरस्य नाशप्रत्यक्षयोरुपार्जने दक्षमिति नोक्तदोषावकाशः । कथमन्यथा "नीलो घटः", "रक्तः पटः" इत्यादिकः सामानाधिकरण्यप्रत्ययः समुपपद्येत भृशं भिन्नयोर्गवाश्वयोस्तस्यानवलोकनादित्येषोऽपि निगदो न श्लाघ्यः

समानप्रतियोगिकयोर्भेदाभेदयोरेकत्र सम्बन्धासम्भवादन्यथा वाजिवारणयोरपि तादात्म्यप्रसङ्गात् ।

ययोरवयवावयविभावो गुणगुणिभावो धर्मधर्मिभावो वा तयोरेव भेदसहाभेदो भवति नान्ययोः अत एव गवाश्वयोर्भेदमात्रस्य स्वस्मिन् स्वस्याभेदमात्रस्य च सत्त्वेन न "गौरश्वः", "घटो घट" इत्यादिको भेदसहाभेदसाध्यः सामानाधिकरण्यप्रत्ययः । इतीयमपि वाङ् नानवद्या, घटे रूपमितिवद् घटो रूपमित्यस्यापि प्रत्ययस्य प्रसङ्गात् । सामानाधिकरण्यप्रत्ययप्रयोजकस्य भेदसहाभेदस्य तयोरबाधात् ।

अस्मिन् मते नीलो घट इति बुद्धौ नीलो न घट इति निश्चयस्य सर्वानुभवसाक्षिकायाः प्रतिबन्धकताया अनुपपत्तिरपि नीलभेदाभेदयोरेकत्रावस्थानसहत्वेन कथितज्ञानयोर्विषयविरोधाभावात् ।

द्रव्यगुणाद्योरत्यन्तभेदे नीलो घट इति सामानाधिकरण्यप्रत्ययो विपन्नः स्यादिति न भेतव्यं नीलपदस्य नीलरूपवति लक्षणाया तदुपपत्तिसम्भवात् ।

न च सामानाधिकरण्यप्रत्ययस्याभेदमात्रोपपाद्यत्वे घटो घट इति प्रत्ययापत्तिर्न प्रतिक्रियेतेति प्रतिपाद्यं तद्धर्मान्यवृत्तिविषयतासम्बन्धेन जन्यज्ञानत्वावच्छिन्ने तद्धर्मभेदस्य कारणत्वेन व्याप्यकार्योत्पत्तेर्व्यापककार्योत्पादकसामग्रीपारवश्येन च तदापत्तिप्रतीकारसारल्यात् ।

समवाये बद्धवैरैर्यद्येवमत्र कल्प्येत यद् भेदो द्विविधः, एकोऽभेदसहोऽपरस्तदसहश्च, एवमभेदोऽपि द्विविधः, एको भेदसहो द्वितीयस्तदसहश्च, तत्र प्रथमो भेदोऽभेदश्च नीलघटाद्योरेव न गवाश्वप्रभृत्योः । तथा च न कथितप्रतिबन्धकताया अनुपपत्तिः सामानाधिकरण्यप्रत्ययस्य चातिप्रसक्तिर्वेति । तदेयमपि कल्पना न कोविदस्वान्तसन्तोषणे प्रवणा, प्रमाणापरिपुष्टभेदाभेदद्वयाद्रापेक्षया प्रामाणिकेन समवायेन वैरत्यागस्यैव योग्यत्वादिति कृतं बहुविस्तरेण ।

## असत्कार्यवादव्यवस्थापनम्—

ननु नैयायिकादीनामारम्भवादस्तदैवोपपत्तुमर्हति यदि तदुपजीव्यभूतोऽसत्कार्यवादो व्यवस्थितः स्यात्। स पुनः परीक्ष्यमाणो न प्रतितिष्ठति। तथाहि द्व्यणुकादि ब्रह्माण्डान्तं सर्वमेव कार्यजातं स्वोत्पत्तेः पूर्वं सर्वथैवाविद्यमानं स्वकारणवर्गेण समुत्पाद्यत इत्येष एवासत्कार्यवादः। परमयन्न परीक्षणं क्षमतेऽसतामुत्पत्त्ययोगात्। तथा हि यद्यसदप्युत्पद्येत तदाऽसत्त्वाविशेषात् कूर्मरोमादिकमप्युत्पद्येत, न चोत्पद्यते, तस्मात्तदिव द्व्यणुकादि कार्यमपि पूर्वमसत्त्वे नैवोत्पद्येत। ननु नैतद् युज्यते दूषणम्। इदं हि तदा युज्येत यद्यसत्त्वमेवोत्पत्तिन्नियमयेत्। परमेतन्नास्ति। न केवलमसत्त्वमेव तन्नियामकमपि तु तत्तत्कार्यकारणकलापसहितन्तत्। कूर्मरोमादीनामसत्त्वञ्च न तत्कारणकलापसहितं तत्कारणस्यैवाप्रसिद्धेः।

वस्तुतस्तु तार्किकाणां नये तेषामसत्त्वमपि नास्ति, यतो ह्यसत्त्वं कालादिसम्बन्धशून्यत्वं कालादिनिष्ठाभावप्रतियोगित्वं वा स्यात्। उभयथाऽपि तत् कूर्मरोमादीनां न सम्भवति प्रतियोग्यनुयोगितयोरेकतरस्या अप्यलीके तैरनङ्गीकारात्।

ननु यदि तेषामसत्त्वं नास्ति तदा **"भावाभावविरोधे हि न प्रकारान्तरस्थितिः"** इत्यौदयनन्यायेन निषिध्यमानात्त्वस्य सत्त्वपर्यवसायितया तेषां सत्त्वं स्यादिति चेन्न तेषु सत्त्वासत्त्वयोस्तन्निषेधयोर्वा नैयायिकैरनभ्युपगमात्।

न च नैयायिकनये निखिलस्य जगतस्सदसदात्मकवर्गद्वय एवान्तर्भावात्तेषामप्येतयोर्वर्गयोरेव कतरस्मिंश्चिन्निवेशस्यावश्यकतया नोदीरितमनवद्यमिति वाच्यम् उक्तवर्गयोर्भावाभावामात्रीयतया तदुभयानात्मनोऽलीकस्य वर्गयोस्तयोरसमावेशस्यैव युक्तत्वात्।

वस्तुतस्तु तद्वर्गयोरलीकस्य प्रवेशाप्रवेशविमर्शोऽनुत्थानप्रतिहत एव "अलीक" इति शब्दे ऋज्वर्थबोधकत्वस्यैवाभावात्। किन्तु ज्ञेयत्वे भावाभावान्यतरत्वनैयत्यस्य निवेदकताया एव कथञ्चिदभ्युपगमात्।

न चैवं कूर्मरोमादिशब्दानामर्थाभावेन साधुत्वं न स्यादिति वाच्यं रोमादौ बाधितस्य कूर्मसम्बन्धस्य विवक्षया तेषां शाब्दसंस्कारोपजीविसाधुत्वे बाधकाभावात्। अर्थाबाधलक्षणस्य च साधुत्वस्यानभ्युपगमात्। एवञ्च "कूर्मरोमादिकमसत्" इत्यादेः "रोमादौ कूर्मसम्बन्धोऽसन्" इत्यादिकमेव प्रतिपाद्यम्।

ननु तथापि यस्य यथाऽकृत्रिममसत्त्वं तथा तस्य सत्त्वन्न कोऽपि कर्तुमर्हति नीलात्मनाऽसतो निसर्गतो धवलस्य तेजसश्शिल्पिशतेनापि नैल्यनिर्माणानवलोकनेन "यो यदात्मको न भवति स तदात्मकः कर्तुं न शक्य" इति नियमस्य विजृम्भमाणत्वादिति चेन्न प्रकृत्या पीतस्य पीतत्वप्रणयने प्रयासादर्शनाद् "यो यदात्मना प्रथमतस्सन् तन्तदात्मकङ्कर्तुन्न कश्चिद् व्याप्रियते" इति नियमस्यापि निर्विचिकित्सतया कलशाद्यात्मककार्याणां प्रथमं सत्त्वे तत्करणे कुलालादीनामप्रवृत्त्यापत्तेः। कार्याणां कारणात्मनैव पूर्वं सत्त्वं न कार्यात्मनेति तेषां कार्यात्मतासम्पादने कारणव्यापारः सप्रयोजन इति वचनमपि न युक्तं कथितनियमानुसारेण नीलात्मनाऽसतस्तेजसो नीलीकरणस्येव कम्बुग्रीवाद्यात्मकस्वात्मनाऽसतः कलशादिकार्यस्यापि तदात्मतासम्पादनस्यासम्भवात्।

अतो "यः पूर्वतो न भवति भवनयोग्यश्च स एव कारणव्यापारैर्निष्पादनार्हः" इत्यस्यैव नियमस्य निर्मलतयाऽसतो जन्मनि न किञ्चित्कण्टकम्।

ननु यो यत्र प्रथमतो न भवति स यदि तत्रोत्पद्येत तर्हि तिलादेव तैलन्न पुलिनाद्, दुग्धादेव दधि नोदकादित्यादीनि

तथ्यानि नोपपद्येरन् । प्रत्युत "लभेत सिकतासु तैलमपि यत्नतः पीडयन्" इत्यवश्यं सत्यं स्यात् ।

अत्र पुनरिदं यदि निगद्येत यत् तिलपुलिनयोस्तैलस्य दुग्धोदकयोर्दध्नश्चासत्त्वसाम्येऽपि तैलदधिकारणानां तिलदुग्धयोरेव सङ्घटनात्तत्रैव तदुत्पत्तेरौचित्यं पुलिनोदकयोस्तेषामसन्निधानेन तयोस्तयोरनुत्पत्तिरेव न्याय्येति, तदपि न पेशलम् । येन पेषणविधिना तिलेभ्यस्तैलमुत्पद्यते येन च मन्थनविधिना दुग्धाद् दधि जायते तादृशोः पेषणमन्थनविध्योस्सिकतासलिलयोरपि सम्भवेन तयोस्तैलदध्नोः कारणान्तराणां सङ्घटनदुर्घटतायाः दुर्वचतया ताभ्यां तयोर्जननस्य दुर्निवारत्वादिति चेन्न, येन सम्बन्धेन यत्कार्यं प्रति यस्य यस्य येन येन सम्बन्धेन कारणता तेन तेन सम्बन्धेन तस्य सर्वस्य यत्क्षणे यदधिकरणे सन्निधानं तत्र तदव्यवहितोत्तरक्षणे तेन सम्बन्धेन तत्कार्योत्पत्तेर्नियमात् ।

तैलदधिकारणकूटघटकानां तिलदुग्धावयवानां च स्वनिष्ठकारणतावच्छेदकीभूततादात्म्यसम्बन्धेन पुलिनपानीययोरवयवेष्वसम्बन्धेन ताभ्यां तयोरुत्पत्त्यापत्त्यसम्भवेन निर्दिष्टतथ्यव्यवस्थितेर्निरुपद्रवत्वात्

न चासतो जन्माभ्युपगमे तैलादीनामसत्त्वस्य निखिलेषु तत्कारणेषु समानत्वात् कस्यचित् कारणविशेषस्य तादात्म्येन कारणतायां विनिगमनाविरहेण तिलाद्यवयवेष्वेव तदुत्पत्तिर्नान्यकारणेष्विति नियमो न स्यात् । सतोऽभिव्यक्तिस्वीकारे तूपादानकारणेष्वेव कार्यस्याव्यक्तसत्तया तत्रैव कार्याभिव्यक्तिर्नान्यत्र तत्र कार्यस्यासत्त्वात्, तद्वत्येव तदभिव्यक्तेर्युक्तत्वादिति वाच्यं सकलेषु तत्तत्कार्यकारणेषु तत्तत्कार्याभावात्मनस्तत्तत्कार्यासत्त्वस्य समानताया एवासिद्धत्वात् । तथा हि तार्किकमतेऽभावो द्विविधो भेदाद्यपरनामाऽन्योन्याभावः संसर्गाभावश्च । तयोः संसर्गा-

भावस्त्रिविधः प्रागभावो ध्वंसोऽत्यन्ताभावश्च, तेषु प्रागभावः स्वप्रतियोगिभूतस्य कार्यस्योपादानकारण एव तिष्ठति नान्यत्र, स एव च तादात्म्येन कारणतायाः कार्योत्पत्तेश्च नियमयितेति नोपादानभिन्ने कार्यजन्मप्रसङ्गसम्भावना ।

न च भावात्मकवस्तूनामाकारस्य गुणजात्यादेश्च भेदेन मिथाविशेषस्य युक्तत्वेऽप्यभावस्याकारादिराहित्येन तत्र तत्कृतविशेषस्यासम्भवादुपादानाश्रिताभावात्तद्व्यतिरिक्तवृत्तेरभावस्य विलक्षणताया अनुपपत्त्योपादानभिन्नकारणेषु कार्योत्पत्तिप्रसङ्गो दुष्परिहर इति वाच्यं भेदात्यन्ताभावयोराकारादिरहितयोरपि सर्वसम्मतवैलक्षण्यानुरोधेन प्रतियोगितादिभेदस्याभावभेदकताया अवश्यमभ्युपगन्तव्यतया पूर्वोत्तरकालात्मकस्वावच्छेदकसम्बन्धभेदभिन्नप्रतियोगिताकतया ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नत्वानवच्छिन्नत्वाभ्यां विभेदितप्रतियोगिताकतयाऽत्यन्तप्रागभावयोश्च परस्परातिरेकस्य वज्रपाणिनाऽप्यवारणात् ।

किञ्च तत्प्रागभावतदत्यन्ताभावयोस्तत्प्रागभावतदितरप्रागभावयोर्भेदकं प्रतिषेधता वक्तव्यमेतद् यत्तस्य भेदजनको निषेध्यतयाऽभिप्रेतो भेदज्ञापको वा ? नाद्यो भेदनित्यतावादिनो नैयायिकादेस्तत्राविरोधात् । न द्वितीयस्तज्ज्ञापकस्य प्रतियोग्यनुयोग्यादिभेदप्रभृत्यनेकवैधर्म्यस्य विभ्राजनात् ।

अयमाशयः— यथैको भावो भावान्तरात् स्वरूपादेव भिन्नः । भेदज्ञानञ्च मिथो वैधर्म्यात् । तथैवैकोऽभावोऽप्यभावान्तरात् स्वरूपादेव भिन्नः । भेदज्ञानञ्च विभिन्नप्रतियोग्यादिकत्वलक्षणवैधर्म्यात् । नन्वभावानामन्योन्यभिन्नतायाः स्वरूपतस्स्वीकारे तेषां तत्त्वव्याघात इति चेन्न 'भावा एव स्वरूपतोभिद्यन्ते नाभावा" इति नियमस्याभावप्रद्वेषमात्रनिबन्धनत्वात् । न च भावानां यत्किञ्चित्स्वरूपोपेततया तेषां स्वरूपकृतभेदस्य

सम्भवेऽपि स्वरूपरहितानामभावानां तत्कृतो भेदो दुर्वच इति-वाच्यम्, अभावस्य पदार्थान्तरत्ववादिना तस्यापि स्वरूपवत्त्वाभ्युपगमात्। अभावस्य किं स्वरूपमिति चेद् भावस्य किं स्वरूपमिति स एव ब्रूयात्। संस्थानविशेषोऽवयवानामिति तु न शक्यवचनं पुरुषाणां निरवयवतया निःस्वरूपत्वापत्तेः। असाधारणो धर्म इति चेत् सोऽभावेऽपि न दुर्लभः। अनुयोगिताविशेषात्मनोऽखण्डोपाध्यात्मनो वाऽभावत्वरूपासाधारणधर्मस्य सुप्रसिद्धत्वात्।

न च समानाश्रययोः प्रागभावयोः प्रतियोगिभेदादेव भेदग्रहो वाच्यः, स चानुपपन्नः, प्रागभावकालेऽसतः प्रतियोगिनस्तेन सह सम्बन्धासम्भवात्। तस्य तत्सम्बद्धतया प्रमित एव च भेदप्रमाकताया न्याय्यत्वात्। अन्यथा रूपस्पर्शाभ्यां निर्विशेषमसम्बद्धयोस्तत्सम्बद्धतयाऽप्रमितयोस्तदीयप्रागभावयोर्भेदस्य दुर्घटत्वापातादिति वाच्यम्, असतोऽपि प्रतियोगिनः प्रागभावेन सह प्रतियोगितालक्षणस्यानुयोगितालक्षणस्य वा सम्बन्धस्य स्वीकारात्।

न च तद्घटशून्ये तद्भूतलवति, तद्भूतलशून्ये तद्घटवति, तदभावद्वयवति च काले तद्घटतद्भूतलयोः संयोगाद्यदर्शनेन सम्बन्धत्वे स्वप्रतियोग्यनुयोग्युभयाभावत्कालावृत्तित्वनियमस्य निष्प्रत्यूहतयाऽसमानकालिकयोस्सम्बन्धोऽसम्भवदुक्तिक इति शङ्क्यं साधनावच्छिन्नसाध्यव्यापकेन वृत्तिनियामकसम्बन्धत्वात्मनोपाधिना ग्रस्तत्वेनोक्तनियमासम्भवात्। असमानकालिकयोरपि वृत्त्यनियामकसम्बन्धस्वीकारे परस्परं प्रहरतोर्मेषयोर्वृत्त्यनियामकः संयोगस्तयोरभावदशायामपि कदाचित् स्यादिति तु न नोद्यं तदानीं वृत्तिनियामकस्य तत्संयोगसमवायस्यासम्भवेन तत्संयोगस्याङ्गीकारायोगात्तत्कारणयोर्मेषयोरभावेन तदुत्पादायोगाच्च।

ननु सत्कार्यवादे यद् यत्राव्यक्तभावेन विद्यते तत् तत्कार्योपादानमित्येवं तत्तत्कार्योपादानतायाश्शक्यव्यवस्थापनत्वेऽप्यसत्का-

वादे तदीयव्यवस्थापकस्य दुर्वचतया निर्दिष्टमुत्तरं न युज्यते । तत्तत्कार्यप्रागभावस्तत्तत्कार्योपादानतानियामक इत्यपि न शक्यवचनं तत्तत्कार्यप्रागभावस्यापि तत्तत्कार्योपादानत्वनियम्यत्वे परस्पराश्रयस्य, अन्यनियम्यत्वे तन्नियामकान्तरस्याप्यपेक्षणीयतया ऽनवस्थानस्य, अनियम्यत्वे सार्वत्रिकत्वप्रसङ्गेन तदायत्ताया उपादानतायाः सर्वसाधारण्यस्य च दुर्वारत्वापत्तेः । इति चेन्न । तत्तत्कार्यप्रागभाववत्तायास्तत्तत्कार्योपादानतायाश्च निसर्गसिद्धतया नियामकानपेक्षणात् ।

तत्तत्कार्यप्रागभावादिः कुत्र निसर्गसिद्ध इत्येव कथं निश्चीयेतेति नानुतप्यं तत्तत्कार्योपलब्ध्या तस्य सुनिश्चेयत्वात् । सत्कार्यवादेऽपि तत्तत्कार्याव्यक्तसत्ताया निसर्गसिद्धतया नियामकनिरपेक्षतायाश्च तत्तत्कार्योपलब्ध्येकनिश्चेतव्यताया एवोपगमनीयत्वादन्यथा समानदोषानुबन्धनस्य तद्वादेऽपि त्रोटनासम्भवात् ।

अतो दधिकामो दुग्धमेवोपादत्ते नोदकं तैलाभिलाषुकस्तिलान्येव सञ्चिनुते न सिकता इत्यसत्कार्यवादे कथम् ? इत्यस्येदमेवोत्तरं यद् यतो दधिकामो दुग्धमेव तत्कारणतया परिच्छिनत्ति नोदकम्, तैलप्रार्थयिता तिलान्येव तज्जनकतया जानाति न पुलिनानि । तत्तत्कार्यकामनामूलकप्रवृत्तौ तत्तत्कार्यकारणताया निश्चय एव च हेतुः । एतस्यैव सत्कार्यवादेऽपि स्वीकर्तव्यत्वात् । अन्यथा तत्तत्कार्याव्यक्तसत्ताशून्यानामुपादानव्यतिरिक्तकारणानां ग्रहणे प्रवृत्तेरुपपादनस्य दुःशकत्वात् ।

अथ तथाऽप्यसत्कार्यवादो न समञ्जसो विकल्पासहत्वात् । तथा ह्युपादानकारणं स्वसम्बद्धं कार्यं जनयति स्वासम्बद्धं वा ? नाद्यः, कार्यस्योत्पत्तेः पूर्वमसत्त्वे तस्योपादानेन सह तदानीं सम्बन्धासम्भवात् । सम्बन्धस्य स्वीययावत्सम्बन्धिसत्तानियतसत्ताकत्वात् । प्रतियोगिव्यधिकरणस्वसम्बन्धाभावाभाववत्पर्यवसन्नं स्व-

सम्बद्धमुत्पादयतीति वचनमपि नादरणीयं सम्बन्धस्यैवाधाराधेयभावस्यापि विद्यमानयोरेव नियमेनोत्पत्तेः पूर्वमविद्यमानस्य कार्यस्योक्ताभावाधिकरणत्वासम्भवात्। नापि द्वितीयः, दुग्धाद्यसम्बद्धत्वस्य दध्नीव तैलादिष्वपि सत्त्वेन सर्वस्मात् सर्वकार्योत्पत्त्यापत्तेः। अथवाऽविद्यमाने विद्यमानीयसम्बन्धस्यैवोक्तनीत्या तदभाववत्त्वस्याप्यसत्त्वेन कुतश्चित्कस्यचिदपि जन्मनोऽनुपपत्तेः। इति चेन्न। सत्कार्यवादस्याप्येतद्विकल्पपङ्कादुद्धारासम्भवात्।

तथाहि दध्यादिकं दुग्धादौ तापनयावनमन्थनादितः पूर्वमस्तीति कथं सत्कार्यवादिभिः प्रत्येतव्यम्? प्रत्यक्षादिति न शक्यते वक्तुम्, कार्यस्येव तत्प्रत्यक्षस्यापि पूर्वं सत्त्वे कारणव्यापारवैयर्थ्यस्य दुष्प्रतीकार्यत्वात्। अनुमानादिति चेत्, तत्किमाकारमिति वक्तव्यम्। "दध्यादिकं दुग्धादौ मन्थनान्तव्यापारात् पूर्वमस्ति तदनन्तरं तत्रोपलभ्यमानत्वात्। यद् यदनन्तरं यत्रोपलभ्यते तत्र तत्पूर्वं तदस्ति" इति नियमादित्यपि न युज्यते। हेतुघटकानन्तर्यस्याव्यवहितोत्तरत्वरूपत्वे तार्किकैर्मन्थनान्तव्यापाराव्यवहितोत्तरक्षणे दध्नो जन्मनस्तदुत्तरक्षणे तत्रेन्द्रियसन्निकर्षस्य तदग्रिमक्षणे च तदुपलम्भस्य स्वीकारेण तादृशव्यापाराव्यवहितोत्तरक्षणोपलभ्यमानत्वहेतोः पक्षेऽसिद्धत्वात्। तृतीयक्षणसाधारणाव्यवहितोत्तरत्वस्य हेतुविग्रहेण ग्रहणाभ्युपगमोऽपि न मनीषिमनोरमोऽप्रयोजकत्वात्। अन्यथा "यदनन्तरं यत्र यदाकारेण यदुपलभ्यते तत्तदाकारेण तत्र तत्पूर्वं विद्यते" इति नियमस्यापि सम्भवेन कारणव्यापारात्पूर्वं कार्याकारस्यापि सत्त्वस्यावश्यमभ्युपेतव्यतया कारणव्यापारवैयर्थ्यस्यापरिहार्यत्वापत्तेः।

न च कार्याकारोऽपि पूर्वमस्त्येव, केवलं तदुपलम्भो नास्ति, तदर्थमेव च कारणानि व्याप्रियन्त इति वाच्यं तथा सति द्वितीयादिक्षणभाविनि तदुपलम्भ इव प्रथमे तदुपलम्भेऽपि कारणव्यापा-

रस्यानपेक्षाऽऽपत्तेराद्योपलम्भ इव द्वितीयाद्युपलम्भेऽपि वा तस्यापेक्षणीयताऽऽपत्तेः । आद्योपलम्भ एव कारणव्यापारः प्रयोजक इति त्वयुक्तं वचः, आद्यत्वस्य दुर्वचत्वात् । स्वसमानविषयकोपलम्भानुत्तरत्वन्तद्, इत्यपि न युक्तम्, सत्कार्यवादे कार्यकारणयोस्तादात्म्येन कार्योपलम्भे कारणोपलम्भानन्तर्येण स्वसमानविषयकोपलम्भानुत्तरत्वस्य दुर्घटत्वात् । तयोस्तादात्म्येऽपि तदाकारयोर्भेदेन कारणाकारोपलम्भे कार्याकारोपलम्भस्य स्वयावद्विषयविषयकत्वरूपस्वसमानविषयकत्वाभावेन तत्र निरुक्तमाद्यत्वं निर्बाधमित्यपि कथनन्न कमनीयं द्वितीयादिकार्याकारोपलम्भविषयस्य द्वितीयादिक्षणसम्बन्धस्य प्रथमादिकार्याकारोपलम्भाविषयतया द्वितीयादिकार्याकारोपलम्भेऽपि निरुक्ताद्यत्वस्य निर्विघ्नतया तत्रापि कारणव्यापारापेक्षाऽऽपत्तेः ।

तत्तत्कार्यकारणव्यापारसाध्योपलम्भेषु द्वितीयाद्युपलम्भव्यावृत्तस्याभिव्यक्तित्वाख्यवैजात्यस्य तदवच्छिन्न एव च कारणव्यापारप्रयोज्यत्वस्याभ्युपगमे न दोष इति चेन्नैतदपि सम्यक्, आद्योपलम्भस्य चक्षुष्मतः कर्तृत्वे चाक्षुपतया नेत्रान्धस्य कर्तृत्वे च स्पार्शनतया चाक्षुषत्वादिसाङ्कर्येणाभिव्यक्तित्वस्य जातित्वासम्भवात् । अखण्डोपाधिरूपताऽपि तस्य न युक्ता मानाभावात् । कारणसामग्रीप्रयोज्यतावच्छेदकतया तत्सिद्धिरित्यपि न, अतिप्रसक्तस्य तस्य कस्या अपि सामग्र्याः प्रयोज्यतावच्छेदकत्वासम्भवात् । तत्तत्कार्यविषयकत्वसहितस्य तस्य तत्तत्सामग्रीप्रयोज्यतावच्छेदकत्वं नानुपपन्नमित्यपि वचो न सम्मान्यम्, अभिव्यज्यतावच्छेदकस्यैव लाघवेन तत्तत्सामग्रीप्रयोज्यतावच्छेदकत्वस्य न्याय्यत्वात् । अभिव्यज्यतावच्छेदकावच्छिन्नस्य प्रागपि सत्त्वेन तस्य तत्तत्सामग्रीप्रयोज्यतावच्छेदकत्वं न सम्भवतीति तु नाशङ्क्यम्, तदवच्छिन्नविषयकाभिव्यक्तित्वावच्छिन्नस्यापि सत्कार्यवादे पूर्व-

सत्ताया अवश्यं मान्यतया तादृशाभिव्यक्तित्वस्यापि तुल्यन्यायेन तत्तत्सामग्रीप्रयोज्यतावच्छेदकतायाः स्वीकारासम्भवात्।

अथाभिव्यक्तिः पूर्वमविद्यमानैवेति तत्सम्पादकत्वेन न कारणव्यापारवैयर्थ्यम्। न चैवमसत्कार्योत्पत्तिप्रसङ्गोऽभिव्यक्तिभिन्नाया उत्पत्तेरनङ्गीकारात्। परमिदमपि न रम्यम्। असत्या अभिव्यक्तेरिवासतान्दध्यादीनामप्यभिव्यक्तिसम्भवेन सत्कार्यवादव्याघातात्।

सत एवाभिव्यक्तिः, अभिव्यक्तेश्च नाभिव्यक्तिरिति तस्या असत्त्वञ्च दोषायेति चेत्तदा कथ्यतां प्रागसत्यभिव्यक्तिः पश्चात् सद्भावं लभते न वा? लभते चेत्तस्या इवासतान्दध्यादीनामपि सद्भावः स्यात् सत्कार्यवादिप्रथितेन पथा च शशशृङ्गादेरपि सद्भावप्रसङ्गोऽपरिहार्यः स्यात्।

यद्युच्येत दध्यादीनीव तदभिव्यक्तिरपि प्राग् वर्तत एव, परमनभिव्यक्ता, तदापि दध्याद्यभिव्यक्तिस्तापनादिमन्थनान्तव्यापारप्रयोज्येति न पार्यते प्रतिपादयितुं तस्यास्तत्पूर्वमपि सद्भावात्। अभिव्यक्ताभिव्यक्तेस्तत्प्रयोज्यत्वन्तु स्वावच्छेदकगर्भेऽनन्ताभिव्यक्तिघटितत्वेन सुदुर्ग्रहं सुदुर्घटञ्च।

एवं सत्कार्यवादे दुग्धाभिव्यक्तेः पूर्वमपि दुग्धस्य सत्त्वेन मन्थनान्तव्यापारस्य तदधीनाया दध्यभिव्यक्तेश्च, अभिव्यक्तदुग्धत्वेन दुग्धस्य दध्यभिव्यञ्जकसामग्रीघटकत्वेऽभिव्यञ्जकतावच्छेदकस्यानन्ताभिव्यक्तिगर्भताया वाऽऽपत्तिर्दुस्तरा स्यात्। असत्कार्यवादे तु दधिदुग्धत्वादिना कार्यकारणभावो न दुष्टो नापि दुर्घटः।

नन्वभिव्यक्तिर्न ज्ञानं किन्तु वर्तमानताख्यः परिणामः। तथा हि सत्कार्यवादिनां नये पुरुषः कूटस्थनित्यः। तदतिरिक्तं च सर्वं परिणामि नित्यम्, परिणामश्च धर्मलक्षणावस्थाभेदात्त्रिविधः। तथा सुवर्णमेकं धर्मि, स्वस्तिकरुचकादिस्तस्य धर्माख्यः परिणामः।

अनागतवर्तमानातीतत्वरूपो धर्मगतो लक्षणाख्यः परिणामः। नवतर-तमत्वादिः, पुराण-तर-तमत्वादिश्च लक्षणगतोऽवस्था-परिणामः।

तथा च दुग्धादि यद्यपि स्वोदयात् प्रागपि विद्यते परं वर्तमानत्वसहितन्न वर्तते, तत्सहितमेव च तद् दध्यादेरभिव्यञ्जकमिति न तदुदयात्पूर्वं दध्याद्यभिव्यक्त्यापत्तिरिति चेदुच्यते सत्कार्यवादिभिस्तदा त एवं वक्तव्या यद् वर्तमानत्वं यदि सर्वधर्माख्यपरिणामसाधारणमेकमेव दध्यादीनामभिव्यञ्जकतावच्छेदकं तदा दुग्धादेरिव तैलादेरपि दध्याद्यभिव्यञ्जकत्वापत्तिः। यदि चैतद्दूषणदूरीकरणाय वर्तमानत्वमाश्रयभेदेन भिन्नम्, दुग्धादिगतं च वर्तमानत्वमभिव्यञ्जकतावच्छेदकं दध्यादिगतं च तद् अभिव्यञ्ज्यतावच्छेदकमिति, वर्तमानत्वविशिष्टदुग्धत्वादिकमभिव्यञ्जकताया वर्तमानत्वविशिष्टदधित्वादिकञ्चाभिव्यञ्ज्यताया अवच्छेदकमिति वा मन्येत, नैतदपि सुन्दरं स्यात्, वर्तमानत्वस्यानागतत्वदशायां सत्त्वे कथितापत्तितादवस्थ्यस्य तदानीमसतस्तस्य पश्चात्तत्सद्भावाभ्युपगमेऽसत्कार्यवादस्य चापत्तेः।

दुग्धादेरनागतत्वदशायां तद्वर्तमानत्वमप्यनागतमेव वर्तते, वर्तमानस्यैव च तद्वर्तमानत्वस्याभिव्यञ्जकताद्यवच्छेदकत्वं स्वीक्रियत इत्यपि कथनं न शोभनं तथासत्यभिव्यञ्जकाभिव्यङ्ग्यभावावच्छेदकस्यानन्तवर्तमानत्वघटितत्वेन सुदुर्ग्रहतायाः सुदुर्घटतायाश्च प्रसङ्गात्।

यद्युच्येत दुग्धादिगतं वर्तमानत्वं दुग्धत्वादिकमेव नान्यत्। कारणात्मना सदपि दुग्धादिकन्तेन रूपेण पूर्वं न भवत्यतस्तदुदयात्प्राक् ततो न दध्यादीनां प्रभव इति। तदपि तुच्छम्। दुग्धाद्युदयात्प्राग् दुग्धत्वादेस्सत्त्वे तेन रूपेण तदाश्रयस्यासत्त्वानुपपत्तेरसतस्तस्य पश्चात् सत्त्वलाभाङ्गीकारे चासदुत्पत्त्यापत्तेः प्रसङ्गात्।

यद्येवं तर्क्येत यद् दुग्धदध्यादिरूपाणां परिणामानामुपादान-भूतं मूलद्रव्यमेकमेव स्थिरं क्रमिकेषु परिणामेषु समनुस्यूतञ्च। ते च मूलद्रव्यात्मना स्वाविर्भावात्पूर्वं विद्यमाना अपि दुग्धाद्या-मकेन स्वविशेषाकारेणाविद्यमानास्तेनाकारेण पश्चात्प्रादुर्भवन्तीति। न चैवमसत्कार्यवादापत्तिरपि, यत् कारणव्यापारात् प्राक् केनापि रूपेण न भवति तस्यैव जन्मनः सत्कार्यवादे प्रतिषेधात्। तदपि न समीचीनम्। एवमभ्युपगमेऽनेकान्तनगरीप्रवेशापत्तेः। निरवयत्वे परिणामायोगात्तदनुरोधेन तस्य मूलद्रव्यस्य सावयवस्यैव कल्पनी-यतया तदपेक्षया लघुनाऽनवयवेन सुवर्णत्वाद्याख्येन सामान्येनैव स्वस्तिकरुचकादिषु समानाकारप्रत्ययस्योपपादनीयतया न्याय्य-त्वाच्च।

किञ्च स्वस्तिकादेर्मूलद्रव्यादनधिकत्वे तदंशलेशस्यापि कर-णीयस्यानवशिष्टतया प्रसज्ज्यमानस्य कारणव्यापारवैयर्थ्यस्य वार-णाय तस्य कश्चिदंशो मूलद्रव्यादधिकः प्रागसंश्चावश्यमभ्युपेय इति तदंशस्यैवासतो जन्मनः स्वीकरणीयतयाऽसत्कार्यवादपादाभिवा-दस्य दुर्वारताऽऽपत्तिः।

अतः पूर्वं विकल्पितयोः पक्षयोः "उपादानकारणं स्वाश्रित-प्रागभावप्रतियोगिपर्यवसन्नं स्वासम्बद्धं कार्यमुत्पादयति" इति द्वितीयः पक्ष एव स्वच्छः समुज्जृम्भते, दुग्धादौ तैलादेः प्रागभाव-स्यासत्त्वेन "सर्वस्मात् सर्वकार्यापत्तिः" इति तत्पक्षे समुद्भावित-दोषस्य प्रसराभावात्।

आद्यः पक्षस्तु सत्कार्यवादेऽपि न क्षोदक्षमः, स्वसम्बन्धस्या-नुगताननतिप्रसक्तस्य दुर्वचतया स्वसम्बद्धजनकताया अनतिप्रस-क्ताया दुर्निरूपत्वात्।

इत्थमेवोपादानकारणं स्वशक्यं करोति स्वाशक्यं वा ? द्वितीये सर्वस्मात् सर्वसम्भवापत्तिः। प्रथमे शक्तेः शक्तशक्योभयतन्त्रतया

स्वोदयात्पूर्वमपि शक्यावस्थानस्य नूनमभ्युपेयतयाऽप्रियस्याप्यसज्जन्मपक्षपरित्यागस्याङ्गीकारापत्तिरित्यपि कुतर्क एव। कारणतातोऽतिरिक्तायाः कार्यौपयिकशक्तेरस्वीकारादीदृशविकल्पोन्मेषासम्भवात्

अविप्रतिपन्नपरस्परभेदयोरुपादानोपादेयभावस्य सर्वमतविरुद्धतया तयोस्तादात्म्यस्य नूनं वाच्यतया कार्यस्य प्रागसत्त्वं न यौक्तिकमित्यपि सत्कार्यपक्षीया वाङ् नादरार्हा भणितभावस्य साजात्यनैयत्यनैजतयापि निर्वाहेण तद्भाजनयोरन्योन्यतादात्म्यस्याप्रामाणिकत्वात्। कार्यकारणयोरनन्यत्वस्यावयविसाधनप्रस्तावेविस्तारेण निराकरणाच्च।

ननु तथापि नानवद्यभावो भवितुमर्हति सत्कार्यतावादस्य, वक्ष्यमाणदूषणग्राहग्रासत्रासत्राणासम्भवात्। तद् यथा – असदुत्पत्तिः सती, असती वा ? सती चेन्, समापन्नं वैयर्थ्यं कारणानाम्। असती चेत्, तस्या अप्युत्पत्त्यन्तरस्य तस्य तस्याप्यन्यान्योत्पत्तेः स्वीकृतिप्रसक्तितो नानवस्थातो निस्तारः। इति चेन्न, उत्पत्तेरसत्त्वमते मालिन्याभावात्। उत्पत्तेरुत्पत्त्यन्तरास्वीकारेणानवस्थाया वारणात्।

**अयमाशयः**—स्वस्योत्पत्तिर्नामाद्यक्षणसम्बन्धः। स च कालिकापरनामा स्वरूपसम्बन्धविशेषः प्रतियोग्यनुयोगिभ्यामव्यतिरिक्तः। क्षण आद्यत्वञ्च तत्तत्कार्याश्रयकालावृत्तिप्रागभावप्रतियोगित्वं तत्तत्कार्याश्रयकालध्वंसानधिकरणत्वं वा। एवञ्च तत्क्षणतत्पटयोः सम्बन्धस्य तदुभयताऽनतिरिक्तत्वेन तदात्मिकाया उत्पत्तेरुत्पादस्यापि तदुभयोत्पत्तितोऽव्यतिरेकान्नानवस्थाप्रवेशः।

न चैवं पटतदुत्पत्त्योरैक्ये पटशब्देनैव तदुत्पत्तेरप्युक्ततया "पट उत्पद्यते" इति सह प्रयोगो न स्यादिति वाच्यं पटशब्दस्य क्षणव्यावृत्तपटत्वप्रवृत्तिनिमित्तकत्वेनोत्पत्तिशब्दस्य च पटतदाद्य-

क्षणसाधारणोत्पत्तित्वप्रवृत्तिनिमित्तकत्वेन तयोः सर्वथाऽर्थसाम्याभावात्।

उत्पत्तेरुत्पद्यमानरूपत्वे द्वितीयादिक्षणेऽप्युत्पत्तिर्व्यवह्रियेत, तदानीमपि तदाश्रयरूपतया तस्याः सत्त्वादिति तु न सन्देह्यम्, उत्पत्तेरुत्पद्यमानमात्ररूपत्वाभावात्। उत्पत्तित्ववतः प्रथमक्षणस्य च गतत्वेन प्रथमक्षणतत्सम्बन्ध्युभयरूपायास्तस्यास्तदानीमविद्यमानत्वात्।

नन्वेवं "पटो द्रव्यम्" इतिवत् "पटः, तत्तदाद्यक्षणौ वा उत्पत्तिः" इति प्रयोगः प्रामाणिकः स्यात्, अभिन्न आश्रयाश्रयित्वाभावेन "पट उत्पद्यते" इति च न स्यादिति चेदिदमपि नापादनार्हं धर्मधर्मिणोस्तादात्म्यमुपगच्छतः सत्कार्यवादिनो मते "रूपं स्पर्शो वा, रूपस्पर्शादिर्वा पटः" इति प्रयोगाभावस्य "रूपादिमान् पटः" इति प्रयोगस्येव चासत्कार्यवादेऽपि तयोरुपपादनसम्भवात्।

उत्पत्तेः पटात्मत्वस्येव ध्वंसप्रतियोगित्वस्यापि तदात्मतया तयोर्यौगपद्यशून्यतया च "पटो विनश्यति" इति प्रयोगो न स्यादित्यपि न शङ्कनीयं लडर्थवर्तमानत्वस्य विनाशरूपे धात्वर्थ एवान्वयाङ्गीकारेण पटस्य स्वध्वंसातिरिक्तत्वेन च पटे तदनन्वयात्। असमानकालिकयोः पटतद्ध्वंसयोः कथं सम्बन्ध इत्यपि न संशयनीयं वृत्तिनियामकसम्बन्ध एव स्वसम्बन्धिद्वयसमकालत्वनियमस्य नियन्त्रिततायाः प्राक् कथितत्वेन वृत्त्यनियामकसम्बन्धस्य विभिन्नकालिकयोरपि कयोश्चित्सत्त्वे बाधकाभावात्। ध्वंसप्रतियोगितायाः प्रतियोगिरूपतामस्वीकृत्य ध्वंसरूपतास्वीकारे कथितशङ्काया उन्मेषासम्भवाच्च। अत एव "पटो विनश्यति" इति प्रयोगे पौनरुक्त्यसन्देहोदयोऽपि न सावसरः पटविनाशशब्दयोर्भिन्नप्रवृत्तिनिमित्तकत्वात्तदर्थयोरनैक्याच्च।

उत्पत्तेः पटतदाद्यक्षणयोः स्वरूपत्वे तयोश्च समान एव समये सञ्जननेन सव्येतरविषाणयोरिव कार्यकारणभावायोगेन स्वस्य स्वकारणताया असम्भवेन च पटस्य स्वोत्पत्तिकर्तृत्वासम्भवात् "पट उत्पद्यते" इति व्यवहारस्याप्रामाण्यापत्तिः स्यादित्यपि संशयो न युक्तः, उत्पत्त्याश्रयत्वरूपस्य तत्कर्तृत्वस्य निर्दोषत्वात्। कार्यकारणयोस्तादात्म्यमानिनस्सत्कार्यवादिनस्तादृशप्रश्नोत्थापने स्वस्यापि सम्पीडनप्रसङ्गात्। पटतदाद्यक्षणयोः कालिकसम्बन्धमात्रस्वीकारात् तस्य च सव्येतरविषाणयोरपि सत्त्वाच्च। न चैवमाद्यक्षणे "पटो जायते" इतिवत् "सव्ये तदितरविषाणं जायते" इत्यपि स्यादिति वाच्यम्, उत्पत्तेः क्षणिकत्वानुरोधेन तयोः स्थिरतरे कालिकसम्बन्ध उत्पत्तित्वाभ्युपगमासम्भवात्।

न च तथापि कर्तृत्वस्य कारकत्वव्याप्यतया, कारकत्वस्य च क्रियान्वयित्वलक्षणतया, उत्पत्तेश्च पटतदाद्यक्षणरूपत्वेनाक्रियारूपतया क्रियानन्वयिनः पटस्य कारकताया एवायोगेन तद्व्याप्यं कर्तृत्वं कथन्तस्य संगच्छेतेति शङ्कनीयं पटाद्यात्मिकाया अप्युत्पत्तेरुत्पत्तित्वेन पद्धातुनोदुपसृष्टेनोपस्थाप्यतया धात्वर्थस्वरूपस्य क्रियात्वस्य निर्बाधत्वात्।

अथ वर्तमानगोचरयोर्बुद्धिव्यवहारयोर्भावात्मकवर्तमानत्वग्राहिताया: सर्वसम्मततया तयोरिवातीतानागतावगाहिनोरपि तयोर्भावविषयकत्वस्यैव युक्ततयाऽतीतानागतत्वयोर्भावरूपताया एवोपगन्तव्यत्वेनासतश्च भावधर्मकत्वस्य दुर्घटत्वादतीतानागतत्वदशायां कार्यसत्त्वस्यावश्यमादर्तव्यतयाऽसत्कार्यवादो विरोद्धव्य एव।

न च कार्यस्य पूर्वं सद्भावे कारणव्यापारवैयर्थ्यप्रतीकारोऽसम्भव इति वाच्यं स्वकारणसमवायस्य स्वसत्तासमवायस्य वा जन्मलक्षणत्वमाचक्षाणैर्वैशेषिकैः समवायस्यैकतया नित्यतया च

तदर्थं कारणानां व्याप्रियमाणताया दुरुपपन्नत्वेनेदृशदोषोद्भावनस्य दुष्करत्वात् ।

**अत्रोच्यते**—तत्तत्कार्योदयात्पूर्वं तत्तत्कार्याणामभावेन तत्तत्कार्यकारणानुयोगिकसमवायस्य तत्तत्कार्यप्रतियोगिकत्वविशिष्टसमवायत्वेन, सत्ताप्रतियोगिकसमवायस्य च तत्तत्कार्यानुयोगिकत्वविशिष्टसमवायत्वेनासत्तया तत्तत्समवायस्वरूपाया उत्पत्तेस्तत्तद्रूपेण सम्पत्तये कारणव्यापारस्य सार्थक्यं निष्प्रतिबन्धं सम्भवत्यसत्कार्यवादे । सत्कार्यवादे तु तन्नितान्तमसम्भव तन्मते प्रागसतः कस्यापि पश्चात् सत्तायाः स्वीकारानर्हतया कार्यस्य प्राक् सत्तोपगमे तदानीं तस्य केनापि रूपेणासत्त्वस्य वक्तुमशक्यत्वात् ।

अतीतानागतत्वकाले घटादीनां सत्त्वे तदानीं जलाहरणादिप्रयोजननिष्पत्त्यापत्तिरपि सुदुस्तरा सत्कार्यवादिनाम् ।

वर्तमानत्वाख्यपरिणामेन तेषां तत्तत्प्रयोजनकारित्वमुपेयते, तेन च रूपेण तत्काले तेषामसत्त्वेन नोक्तापत्तिरिति वचनन्तु न सामीचीन्यमञ्चति प्रागसतो वर्तमानत्वस्य पश्चात् सत्त्वाभ्युपगमेऽसत्कार्यवादापत्तेरुक्तत्वात् ।

अतोऽतीतानागतप्रत्ययव्यपदेशयोर्भावविषयकत्वाभिनिवेशोऽनायत्या परित्याज्य एवेति कृतं विस्तरेण ।

---

## शक्तेः पदार्थान्तरत्वनिरासः—

असतः कार्यत्वव्यवस्थापनप्रकरणे "उपादानकारणं स्वशक्यं करोति स्वाशक्यं वा" इत्येतद्विकल्पपरीक्षणावसरे "कारणतातोऽतिरिक्तायाः शक्तेरस्वीकारात्" इति वाक्येन शक्तेः यः प्रतिषेधः प्रत्यपादि, स न शक्यते मर्षयितुम्, तां विना वह्न्यादेर्दाहादिहेतुताया व्यवस्थापनस्य दुष्करत्वात्। वह्नित्वादिना वह्न्यादेर्दाहादौ हेतुता सुवचैवेति न तस्याः कल्पना सप्रयोजनेति चेन्न, वह्निजलयोर्दाहाशक्तत्वस्य निर्विशेषतया "वह्निना दाहो न जलेन" इत्येतस्या वस्तुस्थितेरुपपादनस्य दुःशकत्वात्। शक्तिपक्षे तु "यत्र यत्कार्यानुकूला शक्तिः ततस्तत्कार्योत्पत्तिः" इत्येवं व्यवस्थापनं सुशकम्। न चाशक्तिपक्षेऽपि "यत्र यत्कार्यकारणता ततस्तत्कार्यप्रादुर्भावः" इति शक्यत एव व्यवस्थापयितुमिति वाच्यं "वह्नावेव दाहकारणता कुतः, कुतो न जले" इत्येतस्यैवोपपादनीयत्वात्, तेनैव तदुपपादनस्य च स्वाश्रयदोषेण दुर्घटत्वात्।

अत्रोच्यते—कस्यचित् पदार्थविशेषस्य कंचित् कार्यविशेषं प्रति या कारणता, तत्र निदानं न काचित् पदार्थान्तररूपा शक्तिः किन्तु तद्गतः कश्चित् क्लृप्त एव धर्मः, क्लृप्तेन सम्भवति निर्वाहेऽक्लृप्तकल्पनाया अयुक्तत्वात्। तथा हि वह्नौ या दाहकता सा तदीयोदग्रोष्णस्पर्शबलात्। स च स्पर्शो जले नास्ति नातस्तत्र दाहकता। प्रत्युत तद्विरोधिनः शीतस्पर्शस्य तत्र सत्त्वेन तस्य दाहप्रतिकूलतैव। काष्ठादौ वायौ चानुष्णाशीतस्पर्शस्य दाहाविरोधिनः सत्त्वेन तयोस्तदनुकूलता। अन्यथा यदि दाहजनकताया उपपत्तये वह्नौ शक्तिः स्वीक्रियते, तदा तस्या अपि किमप्युपपादकं स्वीकार्यम्, अन्यथा सैवाप्रतिबद्धप्रसरा सती सलिलमपि समाश्लिष्य तस्यापि दाहजनकत्वं प्रसभमापादयेत्।

सा सहजतया नोपपादकान्तरमपेक्षत इति चेद् दाहकतैव सहजा सती तयोपपादनं नापेक्षेत। तथा हि दाहकता-दाहजनकता। सा च द्विविधा-स्वरूपयोग्यता फलोपधायकता च। आद्या वह्नित्वादिरूपा सहजाऽत एवोपपादकान्तरनिरपेक्षा। द्वितीया स्वनिरूपितान्यथासिद्धिशून्यत्व, स्वाव्यवहितपूर्वक्षणावच्छेदेन स्वाश्रयसम्बन्धित्वाभ्यां कार्यवत्त्वरूपा। सा च सहकारिसाकल्यतन्त्रा। सहकारिसाकल्यं च स्वहेतुसाम्राज्याधीनमिति न क्वापि पदार्थान्तररूपायाः शक्तेः पादप्रक्षेपावसरः।

अथ यदि नास्ति शक्तिः पदार्थान्तरम्। वह्न्यादिर्वह्नित्वादिनैव दाहादौ हेतुस्तदा यादृशात् करतलानलसंयोगाद् दाहोऽनेकदो-दीयमानः प्रादर्शि तादृशादेव तस्मात् प्रतिबन्धकमण्यादेः समवधाने स कथन्न जायते! प्रतिबन्धकवशादेव न जायत इति तु न सङ्घटते वचः, शक्तेरनभ्युपगमे प्रतिबन्धकस्याकिञ्चित्करत्वात्, शक्तिविघटनव्यतिरेकेण तत्कर्मणो दुर्वचत्वात्। सामग्रीविघटनं तत्कार्यमिति सन्निदधानेन तेन दाहसामग्र्या विघटनान्न तत्समवधाने दाहोदय इति चेन्न प्रतिबन्धकमणिसमवधानेऽपि प्रसिद्धानां निखिलानामेव दाहहेतूनां पूर्ववदेवाक्षोभं विद्यमानताया दर्शनेन प्रतिबन्धकसन्निधाने सामग्री विघटिता भवतीति वक्तुमशक्यत्वात्।

तदानीमनुकूलदैवाभावान्न दाह इत्यपि न शक्यते वक्तुम्, दृष्टकारणसामग्रीसन्निधापनव्यतिरिक्तस्य दैवव्यापारस्य कार्यजन्मन्यनपेक्षणात्। अन्यथा दृष्टकारणपौष्कल्येऽपि दैवमुखापेक्षित्वे कार्यजन्मनो यूना दृढदण्डपाणिना कुलालेन सवेगं नुद्यमानमपि चक्रं कदाचिन्न चलेत्, प्रजातकर्मापि द्रव्यं क्षणान्न विभागभाग्भवेत्, अभिहन्यमानोऽपि मृदङ्गो न ध्वनेत्।

ननु भवत्यदृष्टविलम्बादपि कार्यविलम्बो बहुलम्। को नाम

न जानाति जायमानेऽपि सुचिरं सविधि च बन्ध्यावधूवल्लभसंश्लेषे वंशो नाभिवर्धते, तुल्यमधीयानयोरप्येकतर एव युज्यते सद्विद्यालाभेन नान्यः, समानं व्यवस्यतोरपि सहोदरयोरेक एव लभते वैभववैपुल्यं नापर इति वा। तथा च यथा तत्र तत्र दृष्टकारणसामग्र्येऽपि दौःस्थ्याद्दैवस्य तत्तत्कार्याणि न जायन्ते तथैव दाहप्रतिबन्धकसमवधाने सत्यपि पुष्कले दृष्टदाहककुले दैवदारिद्र्यान्न दाहोदय इत्यस्यात्रापि सुवचतया व्यर्थ एव शक्तिकल्पनाप्रयास इति चेन्न, प्रतिबन्धकसन्निधाने दाहानुदयस्य दैवाभावप्रयुक्तत्वे तत्पूर्वं तदुत्तरञ्च जायमानस्य दाहस्यानुपपत्तिप्रसङ्गात्। प्रतिबन्धकसन्निधानात् पूर्वं विद्यमानन्दैवं तत्सन्निधाने क पलायते! तत्सन्निधाने निधनं नीते सूर्यकान्ताद्युत्तेजकसन्निधापनेनाक्षमीकृते वा सद्य एव कुतः पुनरापततीत्यादेर्दुर्निरूपत्वात्। प्रतिबन्धकं प्राच्यं दैवन्निहन्ति तदभावः सूर्यकान्तादिर्वा दैवान्तरमुत्पादयतीति वचनन्तु न युक्तं दैवस्य भोगेनैव तत्त्वसाक्षात्कारेणैव वा नाश्यमानत्वात्, प्रतिबन्धकमण्यादेस्तदुभयानात्मतया तेन तन्नाशोक्तेरन्याय्यत्वात्, एवं प्रतिबन्धकविगमस्य सूर्यकान्तादिसन्निधानस्य वा विहितनिषिद्धक्रियानात्मतया ततो दैवोत्पत्तिरपि दुर्घटैव, प्रतिबन्धकोत्तम्भकयोः सत्त्व उत्तरेण दैवस्य जन्मनः पूर्वेण सद्यो नाशे च दाहानुत्पत्तितादवस्थ्यं च। नाशे प्रतियोगिनः कारणतया क्षणैकं दैवस्यावस्थाने दाहो न दुरुपपन्न इति स्वीकारोऽनन्तदैवकल्पनागर्भतया महता गौरवेण ग्रस्तः। उत्तम्भकेनोत्पाद्यमानन्दैवं दृढतरत्वान्न प्रतिबन्धकेन शक्यापहरणमिति तु न युक्तम्, सत्येवमुत्तम्भकापनयनेऽपि दाहप्रसङ्गाद् दृढस्य दैवस्य तदापि तादवस्थ्यात्। उत्तम्भका दाहौपयिकन्दैवं संरक्षति, अतस्तत्सत्त्वे दैवस्य सुरक्षिततया दाहो जायते, तदपनयने च रक्षकराहित्येन भक्षकस्य च बुभुक्षोस्सन्निधानेन तस्य विलयान्न स जायत इत्यपि कथनं

न यौक्तिकम्, अखिलस्यास्य कल्पनामात्रत्वात्, भोगतत्त्वदर्शनानात्मनो मरणादेर्दैवस्य नाशकताया विहितनिषिद्धानात्मन उत्तेजकस्य तज्जनकताया वा देवराजेनापि समर्थयितुमशक्यत्वात्।

किञ्च प्रतिबन्धकसन्निधाने यदि दैवाभावाद् दाहाभावो भवेत्तदा कदाचित् तदसन्निधानेऽपि समग्रतायामपि दृष्टानान्निखिलदाहकारणानां दाहाभावो दैवाभावप्रयुक्तः स्याद्। यतो नैतद् राजशासनं यत् प्रतिबन्धकसामीप्य एव दैवदारिद्र्यन्नान्यदेति।

अतो बन्ध्यापुरुषसंश्लेषे सन्तानाजन्मनि, तुल्ययोर्द्वयोरध्ययनसाम्ये समानविद्याया अप्राप्तौ, सहोदरयोर्व्यवसायाविशेषेऽपि सदृशविभवानुदये यद् दैवाभावस्य प्रयोजकत्वमुक्तं तदप्यविचारमात्ररमणीयम्, तत्र सर्वत्र सूक्ष्मेक्षिकयाऽवेक्षणे कस्यचिद् दृष्टकारणस्य विगुणताया नूनं प्राप्यत्वात्। न चैवम् "**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्, विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्**" इति श्रीमद्भगवद्गीतावचनेन दैवस्य स्वतन्त्रं कारणत्वमुदीर्यमाणं विपद्येतेति वाच्यं दृष्टकारणोपसंहारेणैव दैवस्य हेतुतायान्तद्वचनतात्पर्यात्।

यद्येवमुच्येत गदिते गीतावचने चतुर्थातिरिक्तचरणैरेव सर्वेषां दृष्टकारणानामुपसंहारस्य लाभेन चतुर्थस्य चरणस्य दैवगतायां कार्यस्वतन्त्रहेतुतायामेव तात्पर्यं मान्यम्, अन्यथा दृष्टानि कारणानि संकीर्त्य तेषामुपसंहारे दैवं हेतुरित्येवमुक्तेरेव युक्तत्वं स्यात्। एतदपि नोचितम्, कार्यमात्रे दैवस्य कारणताया अयौक्तिकतया कार्यमात्रे दैवं साक्षात् पञ्चमं कारणमित्यत्रोक्तवचसस्तात्पर्यवर्णनासम्भवात्।

कार्यमात्रे दैवस्य हेतुताऽयौक्तिकीति कथम्? इति चेदित्थम्—अगम्यागमनेन तदायत्तसुखसम्भोगस्तद्रसिकानां भवतीति निर्वि-

वादम् । सुखञ्चैतद् धर्मजन्यमिति न शक्यते वक्तुम् . अगम्यागमनात्मकानिषिद्धकर्मद्वारकस्यानर्थफलकस्यैनापूर्वस्यैव धर्मत्वासम्भवात् । अधर्मजन्यं तद् इत्यपि न शक्यते वक्तुम् , अधर्मस्य सुखजनकत्वे "सुखासाधारणनिमित्तभूत आत्मसमवेतो विशेषगुणविशेषो धर्म" इति धर्मलक्षणस्य व्याघातप्रसङ्गात् । धर्माधर्मव्यतिरिक्तस्य च दैवस्याप्रामाणिकत्वात् ।

न च तत्सुखे धर्मस्य साक्षात्कारणता, अधर्मश्चागम्यागमनात्मकतदीयदृष्टकारणोपस्थापनाद् धर्मं सहकरोति, अतः कार्यमात्रेऽदृष्टस्य कारणतां प्रतिषेधन्ती प्रथिता युक्तिस्तस्य तत्र साक्षाद्धेतुतासाधने पर्यवस्यतीति वाच्यम् , अदृष्टस्य कस्यापि क्वापि कार्ये साक्षाद्धेतुतास्वीकारे तत्समानन्यायेन सर्वत्र तस्य साक्षात्कारणत्वसम्भवेन दृष्टसामग्र्या निष्प्रयोजनत्वापत्तेः । अयम्भावः—दृश्यते स्पष्टमेव लोके यत् कस्यचित्प्राणिनोऽनायासेनैवाल्पायासेनैव वा सुखसाधनान्यविकलानि सन्निदधते कस्यचिच्च सुचिरं सुदीर्घं प्रयस्यतोऽपि तानि नोपस्थितानि भवन्ति । कुत एवम् ! इति प्रश्नोपशान्तये धर्म एव प्रवर्तते । यः पुरोपार्जितधर्मधनस्तस्य तानि भवन्ति सुलभानि, यो न तथा तस्य तानि दुर्लभानि, परं यदि धर्मोऽधर्मो वा सुखदुःखयोः साक्षादेव साधनं भवेत्तदा सुखदुःखादिदृष्टसामग्रीसम्पादकतया कथमुन्नीयेत ? किमर्थं च विपुलं विश्वमिदं विनिर्मीयेत ! तस्माददृष्टस्य साक्षाद्धेतुत्वं नैव स्वीकरणार्हम् । अगम्यागमनजन्ये सुखे च धर्माधर्मौ द्वावेव दृष्टतत्साधनोपस्थापनमुखेन हेतू । यानि तस्यानिषिद्धसाधनानि तानि धर्मस्य द्वारभूतानि, यानि चागम्यागमनसमानानि प्रतिषिद्धानि तान्यधर्मस्य द्वाराणि, अधर्मस्य सुखजनकत्वे तत्र निर्दिष्टं धर्मलक्षणमतिप्रसज्ज्येतेति तु न शङ्क्यं निषिद्धाद्वारकसुखसाधनत्वस्य तल्लक्षणघटकीकरणात् ।

ननु मा भवत्वनुकूलदैववैकल्याद् दाहाभावः परम्प्रतिकूलदैववश्यतायां को दोषः! इति चेन्न, दाहप्रतिकूलादृष्टस्योत्तेजकाभावविशिष्टमण्याद्यजन्यत्वे दाहनिरोधार्थं तादृशमण्यादिसन्निधापने नियमेन भवन्त्याः मानवप्रवृत्तेरनुपपत्तिप्रसङ्गात्। तज्जन्यत्वे च प्रथमोपस्थितत्वादुपजीव्यत्वाच्च तादृशमणेरेव प्रतिबन्धकतौचित्यात्। विहितप्रतिषिद्धेतरतया तस्यादृष्टजनकताया अन्याय्यत्वाच्च। न च तादृशमण्यादिर्नादृष्टजनकः किन्तु प्रथमतो विद्यमानमेवादृष्टं मण्यादिसन्निधाने सति दाहं प्रतिबध्नाति नातो निर्दिष्टदोषोद्गम इति वाच्यं विवक्षितविवेकेन तादृशमण्यादेः प्रतिबन्धकतायां पर्यवसानेन प्रतिकूलादृष्टस्यापि दृष्टद्वारेणैव कार्यानुत्पत्तिप्रयोजकतायाः फलनात्।

ननु प्रतिबन्धकमण्यादिसन्निधानस्थले दाहस्य निखिलकारणानां सामग्र्यमक्षुण्णं वर्णयता कार्येषु धर्माधर्मयोः साक्षादानुकूल्यप्रातिकूल्यादिकञ्च निराकुर्वता स्वप्रियायाः शक्तेः कृते किङ्कृतम् भवता? दाहाभावस्य प्रतिबन्धकवशादेवोपपत्तेः, इति चेन्न मण्यादेर्दाहप्रतिबन्धकत्ववाचः शक्तिस्वीकारमन्तरा दुर्घटत्वात्। तथा हि कर्तरि कृता व्युत्पन्नः प्रतिबन्धकशब्दो मण्यादौ तदैव सुप्रयुक्तो भवितुं शक्नुयाद् यदि स प्रतिबन्धशब्दसंवेद्यं किञ्चिद् विदध्यात्। तत्र प्रतिबन्धशब्दार्थो यदि प्रकृते दाहाभावस्तदा सोऽनुत्पन्नस्य दाहस्यात्यन्ताभावः प्रागभावो वा वाच्यः। उभयथापि स मण्यादिनिमित्तको न भवितुमर्हत्यनादित्वादिति प्रतिबन्धाकारकस्य मण्यादेः प्रतिबन्धकशब्दार्थता न युज्यते। शक्तिपक्षे तु वह्न्यादेर्दाहादौ तदनुकूलशक्तिमत्त्वेनैव कारणता, तादृशशक्तिध्वंस एव च प्रतिबन्धशब्दार्थस्तस्य कारणञ्च मण्यादिकमिति तत्र सम्यग् युज्यते प्रतिबन्धकशब्दः। एवञ्च मण्यादेः प्रसिद्धाया दाहप्रति-

बन्धकताया अन्यथानुपपत्त्यैव तत्र दाहानुकूला शक्तिः सिध्यतीति निर्विवादमभ्युपेयम्।

## अत्रोच्यते—

न तावन्मण्यादेर्दाहप्रतिबन्धकता शक्तिमन्तरेण दुर्वचा कारणीभूताभावप्रतियोगित्वरूपायाः प्रतिबन्धकतायास्तां विनापि सुवचत्वात्। तथा हि सूर्यकान्तादिविरहविशिष्टचन्द्रकान्ताद्यभावोऽन्वयव्यतिरेकाभ्यां दाहस्य कारणं तत्प्रतियोगित्वं च तादृशचन्द्रकान्तादौ निष्प्रतिबन्धम्। यत्र चन्द्रकान्तादिर्नास्ति तत्र सूर्यकान्ताद्यभाववति विशेष्याभावप्रयुक्तस्य, यत्र चन्द्रकान्तादिमति देशे सूर्यकान्तादिरस्ति तत्र विशेषणाभावप्रयुक्तस्य, यत्र च सूर्यकान्तादिर्विद्यते चन्द्रकान्तादिश्च नास्ति तत्र विशेष्यविशेषणाभावद्वयप्रयुक्तस्य तादृशविशिष्टाभावरूपकारणस्य सम्पत्त्या दाहो जायते, यत्र च सूर्यकान्तादिर्नास्ति चन्द्रकान्तादिश्च चकास्ति तत्र विशेष्यविशेषणयोर्द्वयोरेव विद्योतनाद् विशिष्टाभावात्मकस्य कारणस्य वैकल्याद् दाहसामग्र्या विघटनेन न दाहो जायते। इत्यनेनैव प्रकारेण दशाविशेषे दाहोत्पादानुत्पादयोर्निर्वाहेण तयोरपि कृते शक्तिपादोपसेवनं व्यर्थमेव।

न च प्रतिबन्धकाभावस्य प्रतिबन्धकप्रतियोगिकाभावत्वेन कारणता न सम्भवति प्रतिबन्धकीभूतैकव्यक्तिसत्त्वेऽपि प्रतिबन्धकव्यक्त्यन्तरप्रतियोगिकाभाववशात् कार्योत्पत्तिप्रसङ्गात्। प्रतिबन्धकत्वावच्छिन्नप्रतियोगिताकसामान्याभावत्वेनापि कारणताऽसम्भवैव परस्पराश्रयप्रसङ्गात्। सिद्धे हि कारणत्वे तद्घटितायाः कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकतायाः सिद्धिः, सिद्धायाश्च तस्यां तदवच्छिन्नप्रतियोगिताकसामान्याभावत्वेन कारणतायाः सिद्धिरिति वाच्यम्, प्रतिबन्धकतावच्छेदकत्वेनाभिमतो यो

मणित्वमन्त्रत्वादिः, उत्तेजकतावच्छेदकत्वाभिमतसूर्यकान्तत्वादि-धर्मावच्छिन्नाभाववैशिष्ट्यावच्छिन्नतत्तदवच्छिन्नप्रतियोगिताकाभावकूटस्य दाहकारणतायां दोषाभावात्।

न च तुच्छतयाऽभावस्य कारणताकल्पनं गगनप्रसूनायमानमिति वाच्यम्, अभावस्य तुच्छताया असत्कार्यव्यवस्थापनप्रकरणे निराकरणात्, कारणताग्राहकयोरन्वयव्यतिरेकयोर्भाव इवाभावेऽपि तुल्यावतारतया तत्कारणताया अपाकरणासम्भवात्, अभावस्याधिकरणानतिरेकवादिभिर्जैमिनीयैरपि भित्त्याद्यभिघाताभावस्य काण्डव्यायाम्, अनुपलम्भस्याभावापरोक्षतायाम्, भयभ्रान्त्यादिसमस्तदोषराहित्यस्य श्रौतप्रामाण्यव्यवस्थायां नित्यविध्यननुष्ठानस्य प्रत्यवायतत्त्यां कारणताया अभ्युपगमात्। अभावव्यवहारप्रवर्तनप्रवणानामधिकरणानामेव तादृशाभावत्वेन तन्मतेऽपि कारणत्वकल्पनायां कण्टकाभावाच्च।

न च यथा विशिष्टं विशेष्यविशेषणाभ्यां व्यतिरिक्तं न किञ्चित्तथैव विशिष्टाभावोऽपि विशेष्यविशेषणाभावाभ्यामतिरिक्तो न कश्चिद् विशिष्टाभावप्रतीतेर्विशेष्याद्यभावावगाहितयाऽप्युपपत्तेः, तदभावद्वयस्य चानुगमकं न किञ्चिदनतिप्रसक्तं रूपं येन तदुभयैकधर्मावच्छिन्ने कारणत्वं सम्भाव्येत, अतः कथितेन पथा विशिष्टाभावस्य कारणताया असम्भवतया पूर्वोक्तं पारिभाषिकमपि प्रतिबन्धकत्वं मण्यादेर्दुरुपपादमित्युपास्यैव शक्तिरिति वाच्यं विशेष्यविशेषणाभावद्वयवति देशे जायमानायाः विशिष्टाभावप्रतीतेस्तादृशाभावद्वयविषयकत्वकल्पनापेक्षया लाघवादेकविषयकत्वरक्षार्थमेकस्यातिरिक्तस्य विशिष्टाभावस्य कल्पनाया न्याय्यत्वात्। न च विशिष्टात्मकस्य प्रतियोगिनोऽभावेन तदभावः कथं सिध्येद् अलीकप्रतियोगिकाभावस्य नैयायिकैरनङ्गीकारादिति शङ्क्यम्, विशेष्यप्रतियोगिकत्वेन तस्या निष्प्रतियोगिकत्वाभावात्। प्रतियोगितत्ता-

वच्छेदकसम्बन्धभेदेनैव तत्तावच्छेदकधर्मभेदेनाप्यभावभेदस्य सिद्धतया विशेषणसामानाधिकरण्यसहितविशेष्यतावच्छेदकावच्छिन्नाभावस्यैकस्यातिरिक्तस्य सिद्धौ बाधकाभावात्।

**केचित्तु** विशेष्यविशेषणयोरभावौ विशिष्टविरोधित्वेनानुगमय्य तयोः कारणतां वदन्ति। विरोधित्वं च सहानवस्थाननियमः, स चोक्ताभावयोर्विशिष्टस्य सर्वानुभवसिद्धो विशिष्टवति विशेष्यविशेषणयोरेकतरस्याप्यभावासत्त्वात्, तयोरेकतरस्य कस्याप्यभाववति विशिष्टस्य चासत्त्वात्। तन्मन्दम्। सहानवस्थाननियमो हि परस्परविरहरूपतया, परस्परविरहव्याप्यतया परस्परविरहाक्षेपकतया वा भवति। तत्र न तावदत्र प्रथमरीत्या स सम्भवति, विशेष्यविशेषणाभावयोः प्रत्येकस्य विशिष्टाभावतया प्रत्येकाभावाभावस्य विशिष्टत्वापत्त्या केवलस्य विशेष्यस्य विशेषणस्य वा विशिष्टत्वप्रसङ्गात् तदभावाभावस्य तदात्मकत्वात्। नापि द्वितीयरीत्या तत्सम्भवः, उक्ताभावयोः विशिष्टाभावव्याप्यत्वेऽपि विशिष्टस्य तयोरेकस्याप्यभावस्याव्याप्यत्वात् विशेष्यमात्रवति विशेषणमात्रवति वा विशिष्टस्यासत्त्वात्। न च मा भवतु परस्परविरहव्याप्यता, विशिष्टविरहव्याप्यता तु तयोरभावयोर्वर्तत एव, तथा च विशिष्टाभावव्याप्यत्वरूपविशिष्टविरोधित्वेन तयोरनुगमः शक्य एवेति वाच्यम्, विशिष्टाभावस्योक्ताभावद्वयभिन्नस्यासिद्ध्या विशिष्टाभावव्याप्यत्वमुक्ताभावद्वयव्याप्यत्वरूपमेव स्यात्, तच्च न केवले विशेष्याभावे न वा केवले विशेषणाभावे किन्तु तद्द्वयोरेव, तथा च कथितेन विशिष्टविरोधित्वेन कारणत्वाङ्गीकारे यत्र विशेष्यविशेषणाभावद्वयं तत्रैव दाहः स्यात्, यत्र च सूर्यकान्ताद्यभावरूप विशेषणमस्ति तत्र चन्द्रकान्ताद्यभावदशायामपि दाहो न स्यात्तदभावद्वयस्यासत्त्वात्। न च विशिष्टाभावस्योक्ताभावद्वयात्मकत्वे प्रत्येकाभावरूपतापि युक्ता द्वयस्य प्रत्येकान-

तिरिक्तत्वात्। एवञ्च प्रत्येकाभावात्मकस्य विशिष्टाभावस्य व्याप्यत्वं प्रत्येकस्मिन्नप्यभावे वर्तत इति नोक्तदोषावसर इति वक्तव्यं, विशेष्याभावात्मकविशिष्टाभावव्याप्यत्वस्य विशेषणाभावव्यावृत्ततया विशेषणाभावात्मकविशिष्टाभावव्याप्यत्वस्य च विशेष्याभावव्यावृत्ततया कतरेणापि रूपेण तदभावद्वयस्यानुगमासम्भवात्।

तृतीयरीत्यापि निर्दिष्टो विरोधो न सम्भावनीयः, आक्षेप्याक्षेपकत्वस्य भिन्नगामितया विशेष्यविशेषणाभावयोस्तदात्मकस्य विशिष्टविरहस्याक्षेपकत्वादेरयुक्तत्वात्।

**परे तु** विशिष्टाभावं विशेष्यविशेषणयोः सामानाधिकरण्यरूप सम्बन्धस्यावच्छेदकत्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपं निर्वर्णयन्ति। यदधिकरणावच्छेदेन तयोः सामानाधिकरण्यं भवति तत्र विशिष्टाभावस्य प्रत्ययव्यपदेशयोरभावो यदधिकरणे च न तयोः सामानाधिकरण्यं तत्र तदीयप्रत्ययव्यपदेशयोः सद्भावश्चैतन्मतस्य मूलम्। परमिदमपि मतं सामानाधिकरण्यस्य व्याप्यवृत्तिताया, व्याप्यवृत्तेश्चावच्छेदकशून्यतायाः, वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकतायाश्च पक्षेऽनुपपन्नतया न प्रशस्यम्।

ननु विशिष्टाभावस्यातिरिक्तत्ववादोऽपि नोदनं न क्षमते। तथा हि सूर्यकान्तादिसन्निधानदशायां तद्विरहविशिष्टचन्द्रकान्तादेरभ्युपगम्यमानोऽभावः किमात्मकः स्यात्! न तावत् प्रागभावः प्रध्वंसो वा भवितुमर्हति तयोः प्रतियोगिसमानकलत्वाभावात्। नाप्यत्यन्ताभावस्तस्याकादाचित्कत्वात्। नाप्यन्योन्याभावस्तस्य दाहहेतुत्वे सूर्यकान्ताद्यसन्निधानेऽपि चन्द्रकान्तादिमति देशे सूर्यकान्तादिविरहविशिष्टचन्द्रकान्तादिभेदस्य सत्त्वेन दाहप्रसङ्गादिति चेन्न, अत्यन्ताभावस्य स्वीकारे दोषाभावात्। न च सूर्यकान्तादौ सन्निहिते विशिष्टाभावस्य सत्त्वादसन्निहिते चासत्त्वात् कादाचित्कस्य तस्य-

कथमत्यन्ताभावता स्यादिति शङ्क्यं सम्बन्धकादाचित्कत्वेनात्यन्ताभावेऽपि कादाचित्कत्वोपगमात्। सम्बन्धस्य कादाचित्कत्वं च कादाचित्ककालघटितत्वात्।

उत्तेजकतायाः प्रतिबन्धकतायाश्चावच्छेदकीभूतसम्बन्धस्य निर्दोषस्य दुर्निरूप्यतया तादृशविशिष्टाभावस्य कारणत्वं न युक्तियुक्तमित्युक्तिस्तु परेषान्न ग्राह्या, उद्देश्यत्व, दैशिकविशेषणत्वयोरन्यतरत्वेन तयोरवच्छेदकसम्बन्धत्वस्वीकारे दोषाभावात्। अन्यतरत्वञ्चाखण्डोपाधिः, स च सामान्यपदार्थेऽन्तर्भूतः। निरवच्छिन्नप्रकारतावत्त्वेन लक्षितस्य सामान्यपदार्थस्य जात्यखण्डोपाधिरूपेण श्रेणिद्वयोपगमात्। यदि च तद् भेदद्वयावच्छिन्नप्रतियोगिताकभेदरूपं तदापि तस्य तद्व्यक्तित्वेनैव सम्बन्धतावच्छेदकतोपगमेन न गौरवम्।

नन्वेवं मण्यादेः पारिभाषिक्याः प्रतिबन्धकताया उपपत्तावपि किञ्चिदकुर्वाणे तत्र कर्तृप्रत्ययान्तस्य प्रतिबन्धकशब्दस्य प्रयोगानुपपत्तिस्तदवस्थैव। कार्यानुत्पत्तिप्रयोजकत्वरूपमेव प्रतिबन्धकत्वंनिर्वाच्यम्। तच्च न पारिभाषिकम् प्रतिबन्धकशब्दघटकप्रकृतिप्रत्ययाभ्यामभिधेयत्वात्। नापि मण्यादौ तत्पदप्रयोगानुपपत्तिस्तस्य कार्यानुत्पत्तिकरत्वादिति वचनन्तु न चारुतास्पदं भवितुमर्हति कार्यप्रागभावरूपाया उत्तरकालानुयोगिकतत्प्रतियोगिकसंसर्गरूपाया वा कार्यानुत्पत्तेर्मण्यादिनाऽसम्पाद्यत्वात्, प्रागभावस्यानादित्वात्, उक्तसंसर्गस्योत्तरकालात्मकतया तत्सम्पादकेनैव सम्पादनात्। क्षैमिक्याः कार्यप्रागभावप्रयोजकतायास्सम्भवेऽपि तद्घटितायाः प्रतिबन्धकतायाः पारिभाषिकत्वस्यापह्नवासम्भवादिति चेन्मैवम्, कर्तृप्रत्ययान्तस्य प्रतिबन्धकशब्दस्य योगलभ्यार्थद्वारेण मण्यादौ प्रयोगस्य सिद्धावेव निर्दिष्टदोषाणामवतरणार्हत्वात्,

तस्य चासिद्धत्वात्। अत आचार्यस्योक्तिरेवात्र न्याय्या। सा चैतादृशी—"मण्यादिसन्निधाने दाहस्य प्रतिबन्धो भवतीत्यस्यायमाशयो यत्तत्सन्निधौ दाहसामग्रीवैकल्यं भवति। तदपि सूर्यकान्तादिविरहविशिष्टचन्द्रकान्ताद्यभावरूपस्य कारणस्यासत्त्वान्नतु वह्न्यादिगतायाः दाहौपयिकशक्तेर्विघटनात्, तस्यां प्रमाणाभावात्। एवञ्च दाहसामग्रीवैकल्यलक्षणस्य दाहप्रतिबन्धस्य कर्तारो मण्यादेः सन्निधापयितारो मन्त्रादेः प्रयोक्तारो वा पुमांस एव वस्तुतः कर्तृप्रत्ययान्तस्य प्रतिबन्धकशब्दस्य योगलभ्यार्थद्वारेण प्रयोगभाजो न तु मण्यादयः। तत्र तु प्रयुज्यमानः प्रतिबन्धकशब्दः पारिभाषिको वा, औपचारिको वा स्वार्थिककप्रत्ययान्तो वा" इति।

इत्थञ्च कथितरीत्या विशिष्टमण्याद्यभावस्य क्लृप्तस्य दाहं प्रति कारणत्वाङ्गीकारेण सामञ्जस्यसम्भवेन वह्न्यादौ सहजायाः शक्तेश्चन्द्रकान्तादिना तन्नाशस्य सूर्यकान्तादिना च पुनः कृत्रिमायाः शक्तेरुत्पादस्य तत्प्रागभावतद्ध्वंसादेश्च कल्पनाप्रयुक्तो महागौरवभारो निष्प्रयोजनतया नैव वहनीयो विपश्चिता।

नन्वभावो वराकः प्राप्तप्रमाणपरिचर्यां शक्तिन्न शक्नोत्यन्यथयितुम्। तद् यथा—"कारणानि स्वकार्यानुकूलोभयावृत्तिभावभूताप्रत्यक्षधर्मधर्माणि, कारणत्वात्, आत्मवत्" इति सामान्यानुमानम्, न चात्र हेतुपक्षतावच्छेदकयोरेकतया विशेष्यविशेषणतयोरवच्छेदकैक्येनोपनयवाक्यतश्शाब्दबोधानुपपत्त्या नैतदनुमानप्रयोगो योग्य इति शङ्कनीयं नवीनैर्विधेयांशेऽधिकावगाहिशाब्दाभ्युपगमेन कारणत्वविशिष्टे तादृशसाध्यव्याप्तिविशिष्टकारणत्ववैशिष्ट्यबोधस्य सुघटत्वेनोपनयसङ्गतेः कार्यनियतपूर्ववर्तिजातीयत्वरूपस्य कारणत्वस्य पक्षतावच्छेदकतायाः सहकारिसमवधानाभावप्रयुक्तकार्याभाववत्त्वरूपस्य च तस्य हेतुतायाः स्वीकारेण दोषा-

नापत्तेश्च । न च दृष्टान्तासिद्धिस्तथाविधस्यादृष्टस्यात्मन्युपगमात् । न चात्मत्वमुपाधिः अन्त्यशब्दध्वंसकारणीभूते काले गगने च चरमशब्दात्मकस्य तादृशधर्मरूपसाध्यस्य सत्त्वेनासत्त्वेन चात्मत्वस्य साध्यव्यापकत्वाभावात् ।

यद्वा—वह्निः स्वकार्यानुकूलाधिष्ठातीन्द्रियधर्मसमवायी, दाहजनकत्वात्, आत्मवत्, इति विशेषानुमानं वह्निवृत्तौ दाहौपयिकशक्तौ मानम् ।

आत्मत्वं नित्यत्वं वाऽत्रोपाधिरिति न वक्तुमर्हं त्रुटिस्पर्शकारणीभूतद्व्यणुकस्पर्शरूपस्य द्व्यणुकद्वित्वकारणीभूतद्व्यणुकैकत्वरूपस्य वा तादृशधर्मात्मकसाध्यस्य द्व्यणुके सत्तयाऽसत्तया चात्मत्वनित्यत्वयोः साध्याव्यापकत्वात्

अथवा—मण्यादिसमवहितो वह्निः दाहजनकदशावृत्तिदाहानुकूलभावभूतधर्मशून्यः, दाह्याजनकत्वात्, दाह्यासंयुक्ताग्निवत्, इत्यनुमानं तादृशशून्यत्वप्रतियोगितया शक्तिसिद्धौ मानम् ।

अत्र साध्योदरप्रविष्टेनानुकूलत्वेन स्थितिस्थापकनामकसंस्कारद्वारकस्यार्थान्तरस्य वारणं नाभिप्रेतं दाहजनकदशायामपि वह्नौ तदस्वीकारात्, तेन विनापि तत्र वेगेनादृष्टवदात्मसंयोगेन वा कर्मोत्पत्तेर्निर्वाहात् । किन्तु तथाभूतस्य शक्त्याख्यधर्मस्य साधनमभिप्रेतं तस्यैवानुमानप्रयोक्तुः काम्यत्वात् । अनुकूलत्वञ्चेह प्रथमान्यथासिद्धिभिन्नान्यथासिद्धिशून्यत्वचतुष्टयवत्त्वसहितं कार्यनियतपूर्ववर्तित्वरूपं कारणतद्भावावच्छेदकसाधारणम् ।

पूर्वानुमानयोः साध्यकुक्षावधिष्ठत्वस्य निवेशोऽदृष्टवदात्मसंयोगेन सिद्धसाधनस्य वारणाय । न चादृष्टमेव जनकं न तु तद्वत्संयोग इति शङ्क्यं तस्य दाहाद्यात्मककार्यव्यधिकरणत्वात् कार्यस्य च स्वसमानाधिकरणगुणजन्यत्वनियमात् । न चैष नियमोऽसिद्धः

स्पर्शवद्वेगवद्द्रव्याभिघातजन्यायां क्रियायां तद्दर्शनात्। उष्णस्पर्शेनावतरतः सिद्धसाधनस्य निवृत्तयेऽतीन्द्रियत्वस्य साधनीयकार्ये सन्निवेशः। तत्त्वञ्च साक्षात्कारगोचरताप्रयोजकप्रत्यासत्तिराहित्यम्। प्रतिबन्धकाभावेन सिद्धसाधनस्यार्थान्तरस्य वा वारणाय साध्यधर्मे भावभूतत्वप्रवेशः।

एवञ्चेदृशैरनुमानैर्दृत्तबलायाः शक्तेः साहसमात्रेण निराकरणं न सम्भवतीति चेन्न, निर्दिष्टानुमानानां विपक्षबाधकाभावेनाप्रयोजकत्वात्, उभयमतसिद्धेन प्रतिबन्धकाभावेनैव सर्वोपपत्तिसम्भवात्। साध्यशरीरप्रविष्टं भावभूतत्वं च व्यर्थं व्याप्यताग्राहक इव व्यापकताग्राहकेऽपि लाघवस्य सहकारितया व्यापकेऽपि व्यर्थविविशेषणताया दोषत्वस्य दुर्निवारत्वात्। द्वितीयाद्यनुमानानां बहिरिन्द्रियाग्राह्यत्वेन सोपाधिताऽपि।

ननु तृणारणिमणिभ्य एकजातीयो वह्निर्जायते। तत्र वह्निसामान्ये तृणत्वादिना कारणता न सम्भवति परस्परप्रभवपावके व्यभिचारात् किन्तु वह्न्यौपयिकशक्तिमत्त्वेन तृणादीन्यनुगमय्य तेनैव रूपेण तेषान्तत्र कारणताऽभ्युपगन्तव्या। एवञ्च तृणादिसमवेतशक्तिदृष्टान्तेनेतरसर्वकारणेष्वपि शक्तिसाधनमनुमानं निष्कण्टकम्।

तृणारणिमणिप्रभवेषु वह्निषु वैजात्यत्रयं कल्पयित्वा तत्तदवच्छिन्ने तृणत्वादिना कारणतोपगमे न व्यभिचार इति कथितक्रमेण शक्तिसिद्धिरप्रामाणिकीति तु न शङ्कनीयं वह्नित्वस्य तृणादिकार्यतानवच्छेदकत्वे तस्याकस्मिकत्वापत्तेः जातियोग्यताया व्यक्तियोग्यतातन्त्रतया तार्णादिवह्नौ तादृशवैजात्यसत्त्वे तत्प्रत्यक्षस्यावश्यकत्वाच्च।

एवं गोमयाद् वृश्चिकाच्च वृश्चिकस्योत्पत्त्या तत्रापि गोमयवृश्चिकयोः वृश्चिकानुकूलशक्तिमत्त्वेनैव कारणता कल्पनीया, अन्यथा

तदुभयप्रभववृश्चिकयोर्वैजात्यकल्पने गोमयजनितवृश्चिकस्य वृश्चिक-
जनितवृश्चिकस्य च सन्ततिपरम्परास्वपि वैजात्यस्य कल्पयित-
व्यतया तासु तदनुभवापत्तेः । गोमयवृश्चिकसन्तत्योरेकस्या एव
वृश्चिकत्वं नान्यस्या इति कथनन्तु निराधारं द्वयोरेव वृश्चिकप्रत्यय-
व्यवहृत्योः समानत्वात् ।

विजातीयकारणेष्वेकजातीयकार्यानुकूलशक्तिस्वीकारे कार्यविशे-
षात् कारणविशेषस्य तदभावात् कार्यविशेषाभावस्य चानुमानं न
स्यात् तज्जातीयकारणकार्यस्य स्वजातीयकार्यानुकूलशक्तिशालिनोऽ-
न्यजातीयकारणादपि सम्भवादिति चेन्न, धूमसामान्ये वह्निसामा-
न्यस्य कारणतया धूमाद् वह्नेः वह्न्यभावाच्च धूमाभावस्यानुमान-
जन्मनो निर्बाधतया कार्यविशेषलिङ्गककारणविशेषानुमानस्य कार-
णविशेषाभावलिङ्गककार्यविशेषाभावानुमानस्य चैकान्तमुच्छेदानु-
पपत्तेः । अन्यथा तृणादिजे वह्नौ वैजात्यपक्षेऽपि तृणादेर्विजातीय-
वह्नाविव वह्नेरपि विजातीयधूम एव कारणताकल्पनसम्भाव-
नया धूमसामान्याद् वह्निसामान्यस्य तस्याभावात्तदभावस्य चानु-
मानं न स्यात्, धूमत्वावान्तरजातिग्रहो हेत्वभावान्न भवितुमर्ह-
तीति तु न वाच्यं तृणादिजन्यत्वग्रहाद् वह्नित्वावान्तरजातिग्रहवत्
तत्तज्जातीयवह्निजन्यत्वग्रहाद् धूमत्वावान्तरजातिग्रहणस्यापि
सम्भवात् । बाधकाभावेन धूमत्वस्यापि वह्निजन्यतावच्छेदकत्व-
सम्भवेन धूमे वैजात्यकल्पनं निर्मूलमिति चेद् बाधकं विना
वह्नित्वस्यापि कारणतावच्छेदकत्वसम्भवेन कारणेऽपि शक्तिसि-
द्धेरसम्भवात् ।

**केचित्तु**—तृणत्वादिना वह्निकारणत्वग्रहस्यापजीव्यतया तद्र-
क्षायै वह्नौ जातिविशेष एव स्वीकार्यो न तु तृणादौ वह्निसामान्या-
नुकूला शक्तिरित्याहुः । परं तन्न युक्तम्, सदृशन्यायेन वह्नित्वेन
कार्यताग्रहस्य रक्षणार्थं तृणादौ शक्तिकल्पनाया अनिवार्यत्वात् ।

तृणादेरेकजातीयकार्यौपयिकशक्तिमत्त्वेन कारणत्वे तृणफूत्काराभ्यामिव तृणतरणिकिरणाभ्यामपि वह्नेर्जन्मप्रसङ्ग इति तु न सन्देहनीयम्, अन्वयव्यतिरेकाभ्यां तृणफूत्कारयोरिव तद्गतशक्त्योरपि परस्परसहकारितया मिथः सहकारिशक्तिविधुराभ्यां तृणार्ककिरणाभ्यां तदुत्पत्तेरनापत्तेः ।

तृणफूत्कारादिघटिते कारणस्तोमेऽरणिनिर्मन्थनादिघटिते हेतुसमूहे मणिदिनमणिमयूखसम्पर्कघटिते जनकवर्गे च वह्न्यौपयिकशक्तिं स्वीकृत्य तादृशशक्तिमत्त्वेन हेतुतोपगमे तृणमन्थनादितो न वह्नेर्जन्मप्रसङ्गशङ्केति कल्पना तु न कमनीया तृणत्वाद्यवच्छेदेन गृहीतायाः शक्तेरसिद्ध्यापत्तेः ।

अत्रोच्यते—तृणारणिमणिव्यक्तीनामनन्तया प्रत्याश्रयमनन्तानां शक्तीनां कल्पनापेक्षया तृणादिजन्यानलेषु जातित्रयकल्पनमेव लाघवात् सम्मान्यम्, योग्यानुपलब्धिबाधाद् वह्नौ वैजात्योपगमोऽनुपपन्न इति शङ्का तु न योग्या, गोमयोद्भूते वृश्चिके स्वल्पश्यामत्वव्यङ्ग्यस्य वार्श्चिके च तस्मिन् मनाक्कपिलत्वव्यंग्यस्य जातिभेदस्य प्रत्यक्षसिद्धतया तस्यैव तृणजन्यवह्निव्यक्तिषु तृणजन्यत्वग्रहोत्तरं जायमानाया मणिजन्यवह्निव्यावृत्ताया अनुगतप्रतीतेरनुरोधेन मण्यादिजन्यानलनिवृत्तायास्तृणजन्यतावच्छेदिकाया वह्नित्वव्याप्यजातेरपि सिद्धेरावश्यकत्वात् । तृणजन्यत्वाद्युपाधिना सा प्रतीतिर्निर्वाह्येति न वक्तव्यमेतद् बाधकं विनाऽनुगताकारप्रतीतेर्जातिविषयकत्वनियमात् ।

न च तृणादिषु वह्न्यनुकूला शक्तिस्तज्जन्यवह्निषु विभिन्नं जातित्रयं वा तदैव कल्पयितुं शक्येत यदि तृणादिषु वह्निकारणत्वं गृहीतं भवेत् । तदेव तु न सम्भवति, तृणारणिमणिष्वेकतमस्याभावेऽप्यन्यसद्भावे वह्निरुत्पत्त्या व्यभिचारादिति वाच्यम्, तृणत्वादिना कारणताया वह्नित्वेन कार्यतायाश्च ग्रहणासम्भवेऽपि

तृणसत्त्वेऽरणिमण्योरभावेऽपि तत्सहकारिसाकल्येऽवश्यं वह्नि-जन्म, तदभावे च नेत्येवंविधान्वयव्यतिरेकाभ्यां वह्निनिष्ठकार्य-तानिरूपितकारणतावच्छेदकवत्त्वस्य तृणे तृणनिष्ठकारणतानिरू-पितकार्यतावच्छेदकवत्त्वस्य च वह्नौ परिच्छेदसम्भवात्। स च परिच्छेदः कारणगतशक्त्या समुपपाद्यः कार्यगतवैजात्येन वा? इति प्रश्नश्च लाघवोपोद्बलितेन मानेन कार्यवैजात्यमुपगम्य समा-धेय इति सुस्पष्टम्।

न च यत्र कार्ये वैजात्यकल्पनमसम्भवि सामग्रीभेदश्च तत्र गतिविरहापत्तिः, यथा द्रव्यनाशः क्वचित्समवायिकारणनाशात् क्वचिच्चासमवायिकारणनाशादिति शङ्क्यं समवायिकारणनाशस्थ-लेऽप्यसमवायिकारणनाशस्यावश्यकतया स्थलद्रव्येऽप्यसमवायि-नाशादेव द्रव्यनाशोपगमान्निमित्तेतरकारणनाशत्वेनोक्तनाशयो-र्द्रव्यनाशकताया अभ्युपगमाद्वा।

वह्नित्वस्य तृणादिजन्यतानवच्छेदकत्वे पूर्वोक्तमाकस्मिकत्वम-प्रतीकार्यं स्यादिति तु नाशङ्क्यम्, मुद्भूतस्पर्शवत्तेजोऽवयवतत्संयोग-समीरणादिघटितसामग्र्या वह्नित्वप्रयोजकत्वस्वीकारात्। न चैवं तृणादीनामभावेऽपि तत्सामग्रीमात्राद् वह्नित्वसामान्यावच्छिन्नं जायेतेति वक्तव्यं सामान्यधर्मावच्छिन्नजन्मनि विशेषधर्मावच्छि-न्नकारणसामग्र्या नियमेनापेक्षणस्य निर्विशेषसामान्याभावेन न्याय्यत्वात्।

---

## आधेयशक्तेर्निरासः

अथोक्तप्रकारेण सहजशक्तेर्निराकरणेऽप्याधेयशक्तिसिद्धिर्दुर्निवारा। तथा हि व्रीहौ प्रोक्षणजन्यः कालान्तरभाविकार्यानुकूलः प्रत्यक्षानर्हः कश्चिदतिशयो नूनं कल्पनीयः। तस्य च व्रीहिसमवेतत्वमेव समुचितं नात्मसमवेतत्वम्, अन्यथा व्यधिकरणस्य तस्य प्रोक्षितमात्रव्रीहौ कालान्तरीणावहनने नियामकत्वं न स्यात्। मन्त्रादिसहकृतत्वमेव प्रोक्षितव्रीहेर्विशेषो न त्वतिशय इति तु न वक्तव्यं मन्त्रादीनामवघाताच्चिरपूर्वमेव प्रविलयात्।

ननु प्रोक्षितानामेव व्रीहीणामवघातेऽन्वय इति न प्रामाणिकं "व्रीहीनवहन्ति" इतिविधेर्व्रीहिमात्रान्वयेऽपि निर्वाहात्। "प्रोक्षिता व्रीहयोऽवघाताय कल्पन्ते" इति वाक्यशेषात् प्रोक्षणवतामेव व्रीहीणामवघातहेतुताबोध इति वचस्तु न साधीयः, प्रोक्षितशब्दस्य भूतकालानुशिष्टक्तप्रत्ययान्ततयाऽतीतप्रोक्षणेषु व्रीहिष्ववघातान्वयेन प्रोक्षणक्षयस्यैवोक्तवचसाऽवघातौपयिकत्वप्राप्त्या प्रोक्षणस्य हेतुत्वासिद्ध्या तदनुरोध्यतिशयकल्पनाया अप्रमाणत्वात्। इति चेन्मैवम्। "प्रोक्षणमवघातजनकं प्रमाणतस्तदर्थमुपादीयमानत्वाद् व्रीहिवद्" इत्यनुमानेन प्रोक्षणेऽवघातहेतुत्वस्य निर्बाधसिद्धिकत्वात्।

न च तथापि प्रोक्षणध्वंस एव तद्व्यापारो मान्यतान्न त्वतिशय इति वाच्यं तथा सति कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्य प्रसक्त्या प्रोक्षणस्याकारणत्वप्रसङ्गात्! अन्यथा यागादिध्वंसस्य यागादिव्यापारत्वसम्भवेन पौरुषादृष्टस्याप्यसिद्धेः। फलानन्त्यभयेनानन्तस्य यागध्वंसस्य न यागव्यापारतेति तु न वक्तव्यम्, यागापूर्वस्येव यागध्वंसस्यापि नियतसमयपर्यन्तमेव फलजनकत्वस्वभावकल्पनायाः सम्भवात्।

प्रोक्षणमुपलक्षणमेव व्रीहीणामवघातोपयोगीति कल्पनमपि न कान्तिमद्, निरन्वयं नष्टस्योपलक्षणतयाऽपि तत्त्वानभ्युपगमात्। उपलक्षणस्यापि सद्भावस्यैव तथात्वेऽनधुनातनस्य कुरुक्षेत्रयोः सम्बन्धस्य क्षेत्रान्तरव्यावर्तकत्वानुपपत्तिरिति तु न चिन्तनीयं कुरुसम्बन्धस्य क्षेत्रान्तरव्यावर्तकत्वमस्वीकृत्य तज्ज्ञानस्यैव तदुपगमात्तस्य च साम्प्रतमपि सम्भवात्। अन्यथा यागोपलक्षितस्य याजकादेरेव स्वर्गप्रदत्वसम्भवेनापूर्वस्यापि सिद्ध्यनापत्तेः।

ननु यागप्रोक्षणयोर्नाविशेषो वक्ष्यमाणानुमानेन यागापूर्वस्य सिद्धेः। तद् यथा—देवदत्तादिदेहास्तदीयगुणप्रभवास्तदीयभोगसाधनत्वान्मालाबालादिवद्, इति चेन्न, तदीयभोगसाधने मनसि साध्याभावेन व्यभिचारात्। कार्यत्वस्य हेतुना क्रोडीकारेऽपि न निस्तारोऽवघाते प्रोक्षणादिभिरिव जन्मान्तरीणैरुपलक्षणैर्ज्ञानेच्छाप्रयत्नैः सिद्धसाधनात्।

तस्मात् प्रोक्षणादयः कालान्तरभाव्यवघातजनकभावभूतातिशयजनकाः प्रमाणतस्तदर्थमुपादीयमानत्वाद् यागकृषिचिकित्सावदिति निर्विवादम्। स चातिशयः प्रोक्षणावघातयोरतिशयावघातयोश्च हेतुहेतुमद्भावावच्छेदकसंसर्गलाघवानुरोधेन व्रीहिगत एव कल्प्यते नात्मगतः।

किञ्च यो यद्गतयत्फलार्थितया क्रियते स तन्निष्ठमेव तत्फलानुकूलमतिशयं जनयतीति नियमस्यामयचिकित्सायां दृष्टतया तद्बलादत्रापि प्रोक्षणस्य स्वसमानाधिकरणस्यैवातिशयस्य जनकत्वसिद्धिरुचिता।

ननु व्रीहिषु नानातिशयकल्पनापेक्षया लाघवादात्मगतैव प्रोक्षणायत्तातिशयोत्पत्तिर्युक्ता। "प्रोक्षणं पुरुषाश्रितातिशयजनकं कालान्तरभाविकार्यजनकत्वे सति विहितत्वाद् यागवद्" इत्यनुमानमपि प्रोक्षणस्यात्मनिष्ठातिशयजनकतामेव साधयतीति चेन्न

कृषिचिकित्सादिना व्यभिचारादप्रयोजकत्वाच्च । व्रीहिगतातिशय-कल्पने कथितं गौरवन्नात्र प्रतिकूलीभवितुमर्हति सर्वाभ्यर्हितकार्य-कारणाभावलाघवसमक्षं तस्य नगण्यत्वात् । अखिलव्रीहिष्वेकस्यैव वाऽतिशयस्य कल्पनात् । एकातिशयस्वीकार एकव्रीहिनाशे नाशापत्त्या न स्वीकर्तुमर्ह इति नार्हं वचो यत्किञ्चिदेकाश्रयनाशस्य तन्नाशकत्वानभ्युपगमात् ।

## अत्रैवं समाधेयम्—

"प्रोक्षणादयः कालान्तरभाविकार्यानुकूलभावभूतातिशय-जनकाः प्रमाणतस्तदर्थमुपादीयमानत्वाद्" इत्यस्माल्लाघवप्रति-सन्धानसहकृतादतिशयसाधकानुमानात् पुरुषसमवेतस्यैकस्यैवाति-शयस्य समादरो न्याय्यः, व्रीहिसमवेतत्व आश्रयनानात्वेऽप्येकत्वा-भ्युपगम एकव्रीहिनाशे नाशापत्तेरनेकत्वे च महागौरवप्रसक्तेः । यावदाश्रयनाशस्याश्रितनाशकत्वोपगम एकत्वपक्षो नोपेक्ष्य इति तु नाच्छं वचो लाघवादाश्रयनाशत्वेनैवाश्रितनाशकत्वौचित्यात् । यत्किञ्चिद्वृक्षावयवनाशस्थलेऽपि पूर्ववृक्षनाशोत्तरं खण्डवृक्षा-न्तरोत्पत्तिस्वीकारात् । न चानेकत्वपक्षोऽपि नानवद्यः कस्यचिदे-कस्य व्रीहेर्नाशे तदाश्रितसंस्कारस्य नष्टतया तावतां संस्काराणाम-भावेन फलानुदयप्रसङ्गादिति वाच्यं संस्कारत्वेनैव व्रीह्याश्रित-संस्काराणां प्रयोजकत्वाभ्युपगमेनैकदण्डसत्त्वे घटोत्पत्तिवद् यत्कि-ञ्चित्संस्कारसत्त्वेऽपि तत्फलोत्पत्तिसम्भवात् ।

प्रोक्षणस्यापूर्वजनकत्वं प्रमाणाभावादसिद्धमिति नाशङ्कनीयम्, "प्रोक्षणमपूर्वजनकं दृष्टद्वाराभावे सति कालान्तरभाविफलजनक-तया विहितत्वाद् यागवद्" इत्यनुमानेन तत्सिद्धेः । न चाप्रयोज-कत्वं यागस्याप्यपूर्वजनकतायामुक्तहेतोरेव प्रयोजकत्वात् । अन्यथा रूपान्तरात्मकप्रयोजकाभावेन यागस्याप्यपूर्वकारित्वानुपपत्तेः ।

अत्र धर्मात्मकस्यैवापूर्वस्य जनकतायाः साध्यत्वेनाभिप्रेततया निषिद्धेऽनैकान्तिकत्वनिराकरणाय विहितत्वपर्यन्तस्य हेतुत्वानुधावनम् । प्रायश्चित्ते व्यभिचारापसाराय कालान्तरेत्यादेस्तत्र सन्निवेशः ।

ननु दृष्टद्वाराभावस्यादृष्टान्यद्वाराभावरूपत्वेऽसिद्धिः परमते व्रीह्याश्रिताया आधेयशक्तेरेव द्वारत्वात् । प्रत्यक्षद्वाराभावरूपत्वे च वैद्यकशास्त्रविहित औषधपानादौ व्यभिचार इति चेन्न शब्दतदुपजीविप्रमाणमात्रप्रयोज्यप्रतीतिविषयद्वारेतरद्वाराभावस्य दृष्टद्वाराभावशब्देन विवक्षणात् । न चौषधपाने व्यभिचारस्तदीये धातुसाम्यात्मनि द्वारे शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणप्रसराभावादिति वाच्यम्, अन्वयव्यतिरेकग्रहात्मकस्यापि मानस्य कदाचित्तत्रावतारात् । वर्णानां जीविकार्जनोपायप्रतिपादनविधिना वैश्यादिभ्यो विहिते कृष्यादौ व्यभिचारवारणप्रयोजनकत्वमपि दृष्टद्वाराभावान्तर्भावस्य निर्विवादम् ।

न च "यो यद्गतफलार्थितया क्रियते स तन्निष्ठमेव फलानुकूलमतिशयं जनयति" इति नियमस्य जागरूकतया प्रोक्षणस्य व्रीहिष्वेवातिशयजनकत्वं न्याय्यमिति वाच्यं शत्रुवधोद्देशेन क्रियमाणे शत्रुगतातिशयाजनके श्येनयागे निर्दिष्टनियमस्य भङ्गाद् विपक्षबाधकाभावेनाप्रयोजकत्वाच्च ।

न च यदुद्देशेन यत्क्रियते तत्तत्र किञ्चित्करमिति नियमस्य पुत्रेष्टिपितृयज्ञयोर्दृष्टतया तद्बलेन व्रीह्यादिमुद्दिश्य प्रवृत्तस्य प्रोक्षणादेरपि तत्रैवातिशयजनकत्वमावश्यकम् । यागवत् पुत्रेष्टिपितृयागयोरपि विहितकर्मतया कर्तर्येवापूर्वजनकतया दृष्टान्तासिद्धिस्तु नाशङ्क्या फलोपपादकादृष्टस्य फलाश्रय एव कल्पनाया औचित्यात् साक्षादुपपादकत्वे लाघवादिति वाच्यम्, उक्तनियमबलेन किञ्चित्करत्वमात्रस्य साधने व्रीहौ संयोगजन्मना सिद्धसाधनात् । अती-

न्द्रियस्य कस्यचिज्जनकत्वस्य साधने च हुताशनादौ यत्किञ्चिद्-तीन्द्रियाजनके तदुद्दश्यके हविस्त्यागेऽनैकान्तिकत्वात्।

न च व्रीहीणामदृष्टजनकत्वे जनितादृष्टानान्तेषां जनितादृष्टस्य बर्हियागस्येव पुनरवघातकर्मण्युपयोगो न जायेत प्रोक्षितव्रीहिजातीयं व्रीह्यन्तरमपि वा समुपयुज्येतेति वाच्यम्, "व्रीहीनवहन्ति" इत्यत्र व्यक्तिवचनानां सन्निहितविशेषपरत्वन्यायेन प्रोक्षितानामेव व्रीहीणामन्वयात्। अन्यथा प्रकरणोपस्थितपरित्यागे तदन्योपस्थिति-कल्पने च गौरवात्। "प्रोक्षिता व्रीहयोऽवघाताय कल्पन्ते" इति वाक्यशेषसंवलितस्यैव विधेरलङ्घनीयत्वाच्च। न चैवं बर्हियागस्यापि पुनरुपयोगः स्यादिति शङ्क्यं जनिताङ्गापूर्वस्य पुनरुपयोगितायाः पुनरुपयोगसमर्थके विधौ सत्येव स्वीकारात्।

अथवा विचित्राः केचन संस्कारा उद्देश्यसहकृता एव पुरोभावि-कार्यमुद्भावयन्ति, यथाऽभिचारसंस्कारो यं देहमुद्दिश्य प्रवर्तते तद्-पेक्ष एव तत्सम्बन्धिन एव दुःखमुत्पादयति, तथा प्रोक्षणाद्यात्मानः संस्कारा अप्युद्देश्यभूतव्रीहिसहकृता एवाग्रेतनं कार्यं निर्वर्तयन्ति।

न च प्रोक्षणप्रभवापूर्वस्य पौरुषत्वे व्यधिकरणतया व्रीहि-गतावघातहेतुता न स्यादिति वाच्यं कारीर्यादिकृतस्य पुरुषाश्रिता-पूर्वस्य वारिवाहेषु सञ्चरणसलिलक्षरणादिक्रियाजनकत्वस्येव प्रोक्षणापूर्वस्यापि स्वाश्रयसंयोगात्मकपरम्परासम्बन्धेन व्रीहिष्वव-घातजनकत्वसम्भवात् प्रामाणिकतया संसर्गगौरवस्य शिरो-धार्यत्वात्।

नन्वेवं पतितपुरुषानुष्ठितप्रोक्षणस्यापात्रे तत्राऽदृष्टाजनकतया तस्य व्यर्थत्वापत्तिः स्यादित्यतो व्रीहिसंस्कारकत्वमेव तस्य ज्याय-इति चेन्न कर्तृकर्मसाधनवैगुण्ये कर्मणां फलापर्यवसानस्य सर्व-सम्मतत्वात्।

शिशुद्धिता.। आदिदृस्स आकाशो गायत्री । आकाशप्रीतये० ।
आदित्प्रत्नस्य० । एषो उषा प्रस्कण्वोऽश्विनौ गायत्री । अश्विनोः
प्रीतये० । एषो० हव ॥

अथ दशलोकपालानाम् । इन्द्रं विश्वेत्यष्टानां जेता मधुच्छन्दस
इन्द्रोऽनुष्टुप् । इन्द्रप्रीतये० । इन्द्रं विश्वा० यसी । अग्निः सप्ति-
मिति सप्तानां सौचीकोऽग्निर्वैश्वानरोऽग्निस्त्रिष्टुप् । अग्निप्रीतये ।
अग्निः सप्तिः जस्व । परेयिवांसमिति षोडशर्चस्य यमः पञ्चानां
यमः षष्ठ्या अङ्गिरसास्तिसृणां श्वानौ चतसृणां यमो द्वादशास्त्रि-
ष्टुभौ पादनिवृतौ पञ्चदशी बृहती षोडशी अनुष्टुप् । यमप्रीत-
ये । परेयिवांस० हिता । वेत्था हि विश्वमाना वै पश्चो निर्ऋति-
प्रीतये । वेत्था हिमित्र । मोष्विति । पञ्चानां वसिष्ठो वरुणो
गायत्री । अन्त्या जगती । वरुणप्रीतये । मोषुवरुणोरीरिषः । वात
इति तिसृणां वातायन उलो वायुर्गायत्री० । वायुप्रीतये० । वात
आवातु० सीवसे० । त्वं सोमेति ग्रहवत् । इमा रुद्रायेति पूर्ववत् ।
सहस्रशीर्षेति प्राग्वत् । त्वमिदुगर्भोऽग्निर्बृहती ब्रह्मप्रीतये । त्व-
मित्सप्रथा० घसः ॥

अथ वस्त्रादिनवानाम् । उमया अत्रेति वसूनां होमवत् ।
इमा गिर इति सप्तदशर्चस्य गार्त्समदः कूर्म आदित्यास्त्रिष्टुप् ।
आदित्यप्रीतये । इमा गिरः वीराः । आत इति पञ्चदशर्चस्य गा-
र्त्समदः कूर्मरुद्रस्त्रिष्टुप् । ईशानप्रीतये० । आतोपित० वीराः ।
मरुतो यस्येति दशानां गौतमो गायत्री । मरुत्प्रीतये० । मरुतो
यस्य० । उमासि० । हिरण्यगर्भ इति दशर्चस्य हिरण्यः प्रजापतिः
कस्त्रिष्टुप् ब्रह्मप्रीतये । हिरण्यगर्भः रयीणाम् । सहस्रशीर्षेत्यच्यु-
तस्य प्राग्वत् । आतेपितरितीशस्य प्राग्वत् । चित्रमिति षण्णां
कुत्सकस्त्रिष्टुप् । अर्कप्रीतये । चित्रं देवानाम्० उत द्यौः । वनस्पत

नन्वेवमपि प्रमदापादप्रहारादशोकद्रुमे शक्तिसमुद्गतिरवश्यं स्वीकार्या, तां विना तद्विकासानुपपत्तेरिति चेन्न कालविशेषावच्छिन्नस्य कामिनीचरणाभिघातध्वंसस्यैव कालान्तरीणकुसुमोदयहेतुतास्वीकारात् ।

कांस्यादिपात्रेषु भस्मघर्षणादजन्या शुद्धिरपि नाधेयशक्तिरूपा किन्तु तादृशघर्षणपर्यवसानपूर्वकालिकयावन्मलसंसर्गाभावसहितस्तादृशघर्षणध्वंस एव तादृशघर्षणादिजन्यो निष्कल्मषकांस्याद्युपभोक्तृनिष्ठः संस्कार एव वा ।

पयःपल्लवप्रभृतीनामभिमन्त्रणादिनापि शक्तेराधानमप्रामाणिकं समयविशेषावच्छिन्नेनाभिमन्त्रणादिप्रक्षयेण तत्तन्मन्त्रदेवतासन्निधिना वा ज्वराद्युपद्रवविद्रावणस्वीकारात् ।

अथ तथापि यवादिबीजानां द्व्यणुकान्तानां नाशेन परमाणौ द्रव्यत्वव्याप्यव्याप्यजातेरभावात्तत्परमाणूनाञ्च सर्वेषां जातिकृतविशेषाभावेन ततो यवादिविजातीयाङ्कुराणां व्यवस्थितादयोपपत्तये तेषु शक्तिविशेषाणामाधानमवश्यमभ्युपेयमिति चेन्न परमाणुगतपाकजविशेषादेवाङ्कुरविशेषोपपत्तिसम्भवात् । स्थूलद्रव्येषु दृश्यमानस्य रूपादेः सजातीयस्य पाकजरूपादेस्तन्मूलभूतेषु परमाणुषु पत्नद्रयएवोपगमात् । यथा यवबीजं सस्यबीजाज्जात्या व्यावर्तते तथा यवबीजपरमाणवः सस्यबीजपरमाणुभ्यः पाकजरूपादिनाशाद् व्यावर्तन्त इत्यभिप्रायः ।

यत्र च तोये तेजसि वायौ वा पाकजः विशेषो न सम्भवति तत्र क्वचिदुद्भूतविशेषगुणस्य, क्वचिदनुद्भूतविशेषगुणस्य, क्वचिद् द्रवत्वस्य क्वचिच्च काठिन्यस्योपपत्तये परमाणुषु शक्तिविशेषा अवश्यं स्वीकार्या इत्यपि नाशङ्कनीयम्, अदृष्टवैलक्षण्यादेव तद्वैलक्षण्योपपत्तेः ।

अथ तथापि प्रतिमादौ प्रतिष्ठादिप्रयुक्ता चाण्डालादिस्पर्श-नाश्या पूज्यत्वप्रयोजिका शक्तिरवश्यं कल्पनीया, प्रकारान्तरासम्भवात्। तथाहि प्रतिमादौ प्रतिष्ठाजन्यं यजमानादृष्टं न तत्पूज्यत्व-नियामकमन्यधर्मस्यान्यम्प्रत्यनुपयोगात्।

अन्यधर्मोऽन्यम्प्रति न नितरामनुपयोगी दानीयपात्रतायाः पुण्यरूपाया दातुर्धर्माधिक्ये प्रयोजकत्वात्, अतो यजमानादृष्टस्य प्रतिमायाः पूज्यतानियमने सम्भवत्येवोपयोग इति चेन्न यजमानीयादृष्टस्य भोगादिना नाशे पूज्यत्वाभावस्य तत्सत्त्वावधि चाण्डालादिस्पर्शेऽपि पूज्यत्वस्य च प्रसक्तेः।

प्रतिष्ठाध्वंसस्यापि तदर्चनीयतानियामकत्वं नाभिनन्दनार्हं तथा सति तदुपजीव्यायाः प्रतिष्ठीयप्रयोजकताया अपायापत्तेः। इति चेन्मैवम्। प्रतिष्ठाविधिना जनितेनास्पृश्यस्पर्शनाश्येन "अहमेषा प्रतिमा," "ममैषा प्रतिमा" इत्याद्याकारेणाहार्यरूपेणाहङ्कार-ममकारात्मकेन देवतासन्निधिना तत्प्रभवेण संस्कारेण वा पूज्यतानियमनसम्भवेन प्रतिमायां शक्त्याधानस्वीकारस्यानावश्यकत्वात्।

न च देवतानाञ्चेतनत्वपक्षे कथितप्रकारस्य सम्भवेपि तासामचैतन्यमते कथमेवं स्यादिति शङ्क्यं तन्मते "प्रतिष्ठितं पूजयेत्" इत्यादिना विधिनोपोद्बलितस्य पूर्वपूर्वपूजितत्वं प्रतिष्ठितत्वं वाऽवगाहमानस्यास्पृश्यस्पर्शनादिसंसर्गाभावसहकृतस्य प्रत्यभिज्ञानस्य पूज्यतानियामकत्वसम्भवात्।

केचित्तु प्रतिष्ठायाः स्वाश्रयसंयोगेन पूजकवर्गेऽपूर्वोत्पादकत्वं मत्वा तस्यापूर्वस्य स्वजनकप्रतिष्ठावत्त्वसम्बन्धेन पूज्यतानियामकत्वमामनन्ति, प्रतिष्ठावत्त्वं च स्वोत्तरत्वप्रतियोगिव्यधिकरण-स्वाभावाभाववत्त्वाभ्याम्।

परम्प्रेक्षावन्तः प्रकारैरेभिर्न प्रसीदन्ति। तथा हि देवतानां सार्वज्ञ्ये मानाभावेन व्यवहितेषु बहुषु प्रदेशेषु प्रतिष्ठाप्यमानासु प्रतिमासु न सम्भवतोऽहङ्कारममकारौ तत्प्रभवसंस्कारौ वा, न च निर्वहति तन्नाशे तासां पूज्यता, न वा सम्भवत्यनतिप्रसक्तानुगमकविकलयोः ज्ञानसंस्कारयोस्तत्प्रयोजकतेत्यतो नाच्छतामृच्छत्यादिमः पक्षः।

द्वितीयः पक्षोऽपि न स्वच्छतया समुद्घोषमर्हति व्यासङ्गादिवशात् प्रत्यभिज्ञानानुदये प्रतिष्ठिताया अपि प्रतिमायाः पूजनस्य नैष्फल्यप्रसङ्गात्, "प्रतिष्ठितं पूजयेत्" इत्यादेर्वचसः प्रतिष्ठायास्तदीय—ध्वंसस्यैव वा पूजनीयतानियामकत्वलाभेन पूर्वपूजितत्वादिप्रत्यभिज्ञाने तन्नियामकताया अनागमिकत्वाच्च।

दृष्टेनोपपादने सम्भवत्यदृष्टेन तत्कल्पनाया अन्याय्यतया प्रतिमाविशेषस्य प्रतिष्ठानकालेऽपूर्वादिजन्मानवच्छेदकायोग्यविग्रहादीनधितिष्ठत्सु जीवेषु प्रतिष्ठयाऽपूर्वजननासम्भवेन तात्कालिकाखिलाधिकारिजनेष्वप्रवृत्तेषु पश्चात्पूजाकर्तृत्वाधिकारिताप्रयोजकशरीरलाभेऽतादृशजीवानां तत्प्रतिमापूजनस्य निष्प्रयोजनतया च तृतीयः कल्पोऽपि कमनीयताकीर्तनन्नैव लभते।

तस्मात् तेषामिदम्मतमेव महनीयं यत् "प्रतिष्ठितं पूजयेत्" इत्यागमः प्रतिष्ठायाः पूजनीयतानिमित्तत्वन्न प्रतिपादयति, किन्तु भूतार्थानुशिष्टनिष्ठाबलाद् विलीनप्रतिष्ठानायाः प्रतिमायाः पूजनकर्मतां कीर्तयति। तस्मात्प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शाद्यनादिसंसर्गाभावकूटसहितः प्रतिष्ठाप्रक्षय एव प्रतिमायाः पूजनीयतानियामक इत्यास्थेयम्।

ननु पापतदभावयोः परीक्षणाय तुलाधिरोहणं शास्त्रविहितम्। तदनुसारेण पापहीनेन कृतारोहा तुला निजोन्नमनेनाधिरोढुर्विजयं कृतपापेन चाधिरुह्यमाना सा स्वावनमनेनाधिरोढुः पराजयं प्रख्या-